मूल रूप से संस्कृत में लिखे गये उच्च कोटि के मौलिक निबन्धों का संग्रह। इसमें संकलित प्रायः सभी निबन्ध विभिन्न परीक्षाओं में लगातार आते रहे हैं। अतः यह नवीन परिवर्द्धित संग्रह बी० ए० और एम० ए० के विद्यार्थियों के लिये अत्यन्त उपयोगी है।

—५.००

# संस्कृत-निबन्धावलिः

सम्पादक :
रामजी उपाध्याय, एम्० ए०, डी० फिल्०, डी० लिट्०
प्रोफेसर तथा अध्यक्ष, संस्कृत-विभाग
सागर विश्वविद्यालय, सागर

लोकभारती प्रकाशन
१५-ए, महात्मा गांधी मार्ग, इलाहाबाद-१

लोकभारती प्रकाशन
इलाहाबाद–१ द्वारा प्रकाशित

●

सम्पादक : डा० रामजी उपाध्याय

●

परिवर्द्धित एवं संशोधित
द्वितीय संस्करण : १९६८

●

सम्मेलन मुद्रणालय
प्रयाग




मूल्य

## समर्पणम्

यस्या नाट्याभियोगेषु बाल्ये मे रसितं मनः ।
तस्यै कृतिरियं स्वस्रे सश्रद्धं हि समर्प्यते ॥

# भूमिका

संस्कृतभाषायां गद्यमाश्रित्य प्राचीनयुगे मध्ययुगे च विरचितं विपुलं साहित्यं वर्तते। अस्मिन् साहित्ये यत्र तत्र निवन्धानां स्थितिः विभाव्यते। ते निबन्धा आधुनिकनिवन्धकलादृष्ट्यानुत्तमा एव सन्ति। तथा हि महाकविबाणस्य कादम्बरीहर्षचरितादिषु बहवो निबन्धाः सन्ति नाम। अपरं च शंकराचार्यस्य ब्रह्मसूत्रभाष्यादिषु दार्शनिकनिवन्धानां परम्परैव राजते। तत्र कतिपयनिबन्धाः शोधसारणिं भजन्ते। तथापि स्वतन्त्ररूपेण निबन्धस्य काचित् काव्यकोटिः पुरा न प्रतिष्ठापिता। आधुनिकयुगे संस्कृत-साहित्यकाराणां निबन्धलेखनस्य प्रचुरा प्रवृत्तिः संजातेति स्पष्टमेव।

अस्यां निबन्धावलौ प्रायशो मम निबन्धानां सङ्कलनं विद्यते। इमे निबन्धा मया १९४०-१९६५ ख्रीष्टाब्देषु विरचिताः। उस्मानिया-विश्व विद्यालयस्य पुल्लेलश्रीरामचन्द्रुडु–महाभागैः कृता द्वादशनिबन्धा इदं सङ्कलनं विचित्रयन्ति। तैरिमे निबन्धा विशेषतोऽस्मै संकलनाय विरचिताः। पुस्तकेऽस्मिन् म० म० रामावतारशर्मणाम् 'संस्कृत-शिक्षा कथमुपयुक्ता भवेत्' इति निबन्धः प्रसुप्तं संस्कृतविद्वन्मण्डलं जागरयितुमेव प्रतिष्ठास्पदं वर्तते। भारतराष्ट्रपतीनां राधाकृष्णन्-महाभागानामुद्बोधवाक्यानामनु-वचनम् 'भारतराष्ट्रस्य भविष्यम्' इति निबन्धे कृतम्। सागरविश्वविद्या-लयीयः प्राध्यापकः डा० विश्वनाथभट्टाचार्योऽस्मन्निवन्धप्रयोजनमनुसृत्य कतिपयनिबन्धान् विरचितवान्। तेषु राष्ट्रिया संहतिरनुत्तमैव। अपरे च कतिपयविद्वांस एतदर्थं निबन्धान् विरचितवन्तः। एतेषां न केवलमहं किन्तु संस्कृतपाठका अपि कृतज्ञाः सन्ति।

सङ्कलनेऽस्मिन् निबन्धविषयाणां वैविध्यं वर्तते। सांस्कृतिक-सामाजिक-राजनीतिक-साहित्यिक-दार्शनिक-धार्मिकादयो निबन्धा अत्र गुम्फिताः सन्ति। गम्भीरतरविषय-विवेचनार्थं क्वचित् पुरातनी युक्ति-युक्ता शैली

प्रयुक्तेति सत्यमेव। तथापि प्रायशो रमणीयैः शब्द-विन्यासैः सुललितभावा अत्र समाहिताः।

संस्कृतपरीक्षाणां पाठ्यक्रमे निबन्धस्य स्थानं सर्वेषु विश्वविद्यालयेषु वर्तते नाम। तथापि नायं विषयो यथोचितं महत्त्वं भजतेऽध्ययनाध्यापन-कर्मणि। संस्कृतविद्यार्थिनस्तु निबन्धलेखनं प्रति मन्दादराः सन्ति। अध्यापका अपि निबन्धलेखानां शोधनमरुचिपूर्णं कर्म मन्यन्ते। फलतो विद्यार्थिनां संस्कृतलेखनायाधुना यथोचितं सामर्थ्यं न जायते। संस्कृत-भाषायामाधुनिकयुगेऽपि बहुविधसाहित्य-सर्जनस्य महतीमावश्यकतां प्रति-पादयन्तो वयं विद्यार्थिनामुपयोगाय आदर्शरूपं पुस्तकमिदं संकलितवन्तः। सङ्कलनमेतत् एम्०ए०-बी०ए०-आचार्य-शास्त्रिपरीक्षार्थिनोऽभिनवविचार-णानिबन्धस्य शक्तिं ग्राहयिष्यतीति मे विश्वासः।

उपाध्यायः श्रीरामः

२.१०.'६५

## निबन्धानुक्रमणिका


| | | |
|---|---|---|
| १. | भारतस्यैक्यम् | १ |
| २. | संस्कृतशिक्षा कथमुपयुक्ता भवेत् | ६ |
| ३. | 'पुराणमित्येव न साधु सर्वम्' | १४ |
| ४. | 'चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च' | १७ |
| ५. | आदिकविर्वाल्मीकिः | २३ |
| ६. | 'अहिंसा परमो धर्मः' | २९ |
| ७. | "क्लेशः फलेन हि पुनर्नवतां विधत्ते" | ३३ |
| ८. | 'न जातु कामः कामानामुपभोगेन शाम्यति' | ३६ |
| ९. | "नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण" | ३९ |
| १०. | पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः | ४२ |
| ११. | सहसा विदधीत न क्रियाम् | ४५ |
| १२. | चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः | ४९ |
| १३. | "स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" | ५३ |
| १४. | भारतीय संस्कृतेर्वैशिष्ट्यानि | ५७ |
| १५. | काव्येष्वलंकारः | ६२ |
| १६. | कविः कालिदासः | ६७ |
| १७. | ऋतूनां रामणीयकम् | ७५ |
| १८. | 'उत्तमं हि धनं विद्या दीयमानं न हीयते' | ८२ |
| १९. | 'सुकविता यद्यस्ति राज्येन किम्' | ८८ |
| २०. | विद्या ददाति विनयम् | ९३ |
| २१. | बहवो गुरवो लोके शिष्यवित्तापहारकाः। विरला गुरवो लोके शिष्यचित्तापहारकाः॥ | ९८ |
| २२. | आचारः परमो धर्मः | १०२ |
| २३. | राष्ट्रिया संहतिः | १०७ |
| २४. | आचार्य-गौरवम् | ११२ |
| २५. | कर्मयोगः | ११७ |
| २६. | मोक्षः | १२० |
| २७. | कविर्मनीषी | १२४ |
| २८. | सुरगवी | १२८ |

२९. तस्माद् युध्यस्व भारत ! १३२
३०. आधुनिक शिक्षा नीतिः १३९
३१. संस्कृत-जीवति वा न वा १४४
३२. संस्कृत-विश्वविद्यालयः १४८
३३. भारतराष्ट्रस्य भविष्यम् १५२
३४. "कालो ह्ययं निरवधिर्विपुला च पृथ्वी' १५६
३५. 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरण-प्रवृत्तयः' १६०
३६. गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः १६४
३७. विश्वशान्तेरुपायाः १६७
३८. 'अन्नं वहु कुर्वीत' १७३
३९. वाक्यं रसात्मकं काव्यम् १७८
४०. अल्पव्ययता साधुः १८५
४१. उदारचरितानां तु वसुधैव कुटुम्बकम् १९०
४२. वसन्त-वर्णनम् १९६
४३. 'सर्वं खल्विदं व्रह्म' २०२
४४. काशीपुरीयं प्रतिभातु नित्यम् २०८
४५. वहुज्ञता-सम्पादनं परमावश्यकम् २१३
४६. अनेकान्तवादः २१५
४७. संस्कृतिः खलु परिपालनीया २१९
४८. 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी २२३
४९. देशरक्षा परो धर्मः २२८
५०. संस्कृतज्ञ-जीवन-दिग्दर्शनम् २३२
५१. अन्तरं महदन्तरम् २३७
५२. सत्सङ्गतिः २४२
५३. पुरा भारते नारीणां प्रतिष्ठा २४६
५४. दारिद्र्ये वहवो गुणाः २५२
५५. शङ्कराचार्यः २५७
५६. मित्रम् २६१
५७. पुरा भारते शूद्राणां स्थितिः २६६
५८. भारतीया धार्मिक-सहिष्णुता २७२
५९. ग्राम-जीवनम् २७८
६०. संस्कृत-शिक्षणस्य समस्याः २८३

## १. भारतस्यैक्यम्

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्।

भारतस्य उपर्युक्तपरिधिः विष्णु-पुराणप्रतिपादित एव शाश्वतं समादरणीयो वर्तते। मार्कण्डेयपुराणे तदेव समर्थितम्—

दक्षिणापरतो ह्यस्य पूर्वेण च महोदधिः।
हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः॥
तदेतद्भारतं वर्षम्।

भारतस्येदमैक्यं सांस्कृतिकसंविधानानुरूपं सुघटितिम् विदितमेव विदुषाम्। बहुषु राज्येषु भूतेष्वपि मनुना निर्दिष्टो जीवन-विधिः—वर्णाश्रम-व्यवस्था, राजधर्मः, श्राद्धादि-पद्धतिः सर्वस्मिन् भारते समाना एव।

भारतस्य संस्कृतिप्रकृत्योर्विभूतीनां गणनाप्रसङ्गे प्रायशोऽस्य सर्वभागेष्ववस्थितानां नदीनां गंगा-यमुना-गोदावरी-सरस्वती-नर्मदा-सिन्धु-कावेरीणाम्, नगरीणामयोध्या-मथुरा-माया (हरद्वार)-काशी-काञ्च्यवन्तिका-द्वारावतीनाम्, पर्वतानां महेन्द्रमलयसह्यशुक्तिमदृक्षविन्ध्यपारियात्राणां चाकलनं क्रियते। शङ्कराचार्यस्तु भारतस्य सीमान्तप्रदेशे विश्वविद्यालयरूपान् मठान् बदरीद्वारका-कांची-पुरीषु स्थापयामास। चक्रवर्तिराजेभ्यः समग्रं

भारतमर्थशास्त्रानुसारं चक्रवर्ति-क्षेत्रम्। यथा——तस्यां हिमवत्समुद्रान्तरमुदीचीनं योजनसहस्रपरिमाणं तिर्यक्चक्रवर्तिक्षेत्रम्।

पुरा भारतस्य सर्वेषु भागेषु संस्कृतं राष्ट्र-भाषारूपेणाविद्यत। इत्थमेव सर्वभागेषु सर्वेषां विज्ञानदर्शनधर्माणां वेदोपनिषद्रामायणमहाभारतनाट्यशास्त्रमहाकाव्यादीनां तेषां रचयितॄणां च प्रभावोऽभवत्। रामकृष्णमहावीरगौतमशङ्कराचार्यादीनां परिभ्रमणोपदेशभूमिः प्रायः भारते सर्वत्रैवासीत्। देशेऽस्मिन्नधुनापि प्रायः सर्वत्रैव सामाजिकव्यवस्थैकरूपैव वर्तते।

राजनीतिकदृष्ट्या भारतस्यैकत्वमसन्दिग्धमेव वर्तते। समग्रभारतं सदैवैकच्छत्राधीनं नाभवदिति सत्यमेव। तथापि बहवस्तत्र महाराजा बभूवुर्येषां दिग्विजयप्रवृत्तिर्भारतस्यैक्यमेव राजनीतिकदृष्ट्यापि प्रमाणयति। प्राचीनभारते राजा तु मनोः प्रतीकमात्रमेवासीत्। कस्मिंश्चिदपि काले भारतस्य विभिन्नभागेषु राजमाना बहवः राजान एकस्य मनोरनेकरूपाण्येवासन्। अस्मिन् प्रसङ्गे राज्ञो महत्त्वं न वर्तते। महत्त्वपूर्णं तदासीन्मनुमार्गेण प्रणिहिता राजनीतिः, या समस्ते भारते एकैवाभवत्।

अपरं च भारते न काप्यासीत् तादृशी राज्यानां शाश्वती सीमा ध्रुवं वा क्षेत्रं यादृशी योरोपीयराज्येष्वधुना वर्तते। यः कश्चिदधिकतरः शक्तिशाली राजा बभूव स यथेष्टं क्षेत्रमधिकृत्य स्वराज्यसीमां निर्मितवान्। अस्यां स्थितौ बहूनां राज्यानामस्तित्वे भूतेऽपि देशस्यास्य साकल्यं न विलुप्तम्। ततो न कदाप्यस्य देशस्य छिन्नाङ्गत्वं समर्थनीयम्।

विदुषामाचरितैः भारतस्यैक्यं भृशं प्रतिष्ठापितं दृश्यते। सकला भारतभूमिः तेषां ज्ञानचयनक्षेत्रमभवत्। अखिलं भारतं तेषां प्रतिभाप्रकाशनस्य स्थलमवर्तत। तथा हि—कोंकणदेशोद्भवः प्रतिहारेन्दुराजः काश्मीरदेशेऽध्ययनार्थं समागतः। कश्मीरस्य महाकविः विल्हणः कश्मीरं परित्यज्य कर्णाटकदेशस्य भूपतेः परमार्डीति नाम्न आश्रयं जग्राह। तत्र स विद्यापतिः नियुक्तः। राजशेखरो महाराष्ट्रे जातोऽपि कान्यकुब्जप्रदेशं स्वीचकार। काव्यमीमांसायां भारतस्य विविधभूभागानां यद्वर्णनं तेनाकारि तदखिलभारतस्यैव नागरिकतां तस्य प्रमाणयति। भारतस्य सर्वान् भागान् प्रति पूर्णा प्रतिपत्तिः तस्य परिलक्ष्यते।

अपरञ्च रूपकेषु भारतदेशस्य विविधभागोत्थितानां भाषाणां प्रयोगं कृत्वैव सुसंस्कृतनागरिकाणां सर्वभाषावैशारद्यमपेक्षमाणा नाट्यकारा विविधप्रान्तानां भाषात्मकमेकीकरणमुपजह्रुः। अलंकारादीनां प्रयोगार्थमखिलभारतमेव तेषां कल्पनोद्भूतानामुपमादीनामुदाहणायोर्वरं क्षेत्रमासीत्। तथा हि—वर्णनप्रसङ्गे कश्मीरेषु मातृगुप्तस्याभिषेकः सम्पद्यते। कल्हणस्य लेखिन्या रेवास्रोतः प्रवहति राजतरंगिण्याः श्लोकेन-

तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत्।
सशब्दमभिषेकाम्बुरेवास्रोत इवाबभौ।

कश्मीर-विन्ध्य-रेवाणामेकस्मिन् श्लोके सन्निवेशः देशस्यैकत्वं व्यंजयति।

आध्यात्मिकदृष्ट्या वहूनां देवपुरुषाणां नैत्यिकसाधनक्षेत्रं

शाश्वतरूपेण सम्पूर्णं भारतमेव वर्तते। तद्यथा आदिगुरोर्दत्तात्रेयस्योदाहरणं विद्यते। स प्रतिदिनं सह्याद्रि-पादे रेणुकापुरे विश्रमं लभते। दत्तात्रेयस्य पीठस्थानं तत्र विद्यते। प्रतिदिनं स वाराणसीमागच्छति स्नानार्थम्। कुह्वाड-क्षेत्रे स प्रतिदिनमर्घ्यदानं प्रातःसन्ध्यां च करोति। कोल्हापुरे दक्षिणकाश्यां वा प्रतिदिनं स भिक्षाग्रहणं करोति, पाञ्चालपुरे तद्भिक्षान्नं खादति च। चन्द्रभागातटे स्थिते विट्ठलपुरे (सोलापुरजनपदस्य-पण्ढरपुर नगरे)तिलकधारणं करोति। भीमाभरजयोः नद्योः संगमस्थले गाणगापुरे दत्तात्रेयो योगसाधनं करोति। कुरुक्षेत्रस्य स्यमन्तकतीर्थे आचमनं करोति। प्रतिदिनं स सूर्योदयादारभ्यासन्ध्यं यत्किञ्चित् कार्यमुद्दिश्य सम्पूर्णभारतस्य परिक्रमं सम्पादयति। तत्सर्वं सिद्धदेहानां देशकालव्यवधानराहित्येन सम्भवेदिति निश्चप्रचम्।

तदित्थं पुरा क्वचिद्राजकीये ऐक्ये विलुप्ते सति भारतस्य सांस्कृतिकैक्यं सर्वस्य देशस्य समानाभ्युदयाय प्रतिष्ठितमासीत्। अधुनापि राष्ट्रियैकतायै सांस्कृतिकैक्यं साहाय्यमाचरतीति सुसिद्धमेव।

सम्प्रति शिक्षित-समाजे भारतस्यैक्यस्यावबोधः तावन्मात्रं नास्ति यथापूर्वमासीत्। तत्रास्माकं धर्मनिष्ठसनातन-संस्कृतिं प्रति हीनश्रद्धा एव कारणम्। भारतीयसंस्कृत्यनुसारं योरपामेरिकादिदेशीयानामाधिभौतिकैश्वर्यं सर्वोत्तमं न मन्यते। अतएवाधुनिकयुवकेभ्यः सा न रोचते।भा रतीय-संस्कृतेरुदात्तपक्षमपि ते युवानो न सम्यग्जानन्ति।समग्रभारतभूमिं प्रतिभारतस्य पुरातन-सांस्कृतिकोपलब्धिं प्रति च समेषां श्रद्धां जागरयितुमेव केचिदुपाया

अवलम्बनीयाः। तथाहि—तीर्थयात्रिकेभ्यो विद्यार्थिभ्योऽध्यापकेभ्यश्च देश-दर्शनस्याल्पव्ययसाध्या व्यवस्थाः कार्याः। विशेषत उत्तरदक्षिण-भूभागानां जनतायाः परस्परं सम्मेलनं शिक्षण-संस्थासु यथा भवेत्तथा प्रयतनीयम्। भारतस्य सांस्कृतिकभाषा संस्कृतमिति तस्याध्ययनं सर्वेभ्यो विद्यार्थिभ्योऽनिवार्यमेव विधेयम्। भारतीय-संस्कृतिविषयकाणि पुस्तकानि सर्वेभ्यो विद्यार्थिभ्यो मूल्य-रहितं प्रदेयानि। अन्येऽपि तादृशो बहूनुपायान् समालम्ब्य देशस्यैक्यं संरक्षणीयमिति परमावश्यकता।

## २. संस्कृतशिक्षा कथमुपयुक्ता भवेत्

संस्कृतशिक्षाया गौरवं कस्य भारतीयस्य न विदितम् भाषान्तराणि देशेऽस्मिन् प्रचारं भजन्ति। प्रान्तीयास्तत्र महाराष्ट्री, वंगीया, गुर्जरीया, तामिलीत्येवमादयः, राजकीया च राष्ट्रभाषा। पूर्वराजकसम्बन्धात् पारस्यभाषाऽपि यथा कथञ्चित्केषुचिदद्यापि प्रचरन्ती समुपलभ्यते। अनेकभाषावगाहनरसिकेषु योरपीय-भाषाणां शिक्षापि प्रवर्त्तते।

तत्र सर्वास्वीदृशीषु भाषासु संस्कृतेन महिष्ठोऽस्माकं सम्बन्धः। धर्मकार्याणि सर्वाण्यस्माकं तत्तत्प्रान्तीयानां संस्कृतेनैव निर्वहन्ति, येनाद्यापि संस्कृतं गेहे गेहेऽवसरेषु श्रूयते इति वैदेशिका अपि विद्वांसः संस्कृतभाषां जीवन्तीममरीं मन्यन्ते।

स्थिरत्वं देशव्यापित्वं जगन्मान्यत्वं बहुविज्ञानाश्रयत्वं साम्प्रतिकविज्ञानविशेषजनकत्वञ्च संस्कृतगिरो गुणा अनन्यसाधारणाः। तथाहि—चरकार्यभटादयश्चेदस्थिरेषु स्वकालिक प्राकृतेषु निजप्रबन्धान् व्यरचयिष्यन् सर्वथा लुप्तप्रायत्वं तद्विद्यानामद्याभविष्यत्। शंकराचार्यश्चेत्केरलभाषया ब्रह्मसूत्रभाष्यं न्यभन्त्स्यत् को नामार्यावर्तीयस्तस्मात्तत्त्वबोधसौभाग्यभागभविष्यत्। कालिदासो वा पृथ्वीराजरासोभाषया तत्सदृशेन वा प्राकृतेन केनापि रघुवंशं व्यधास्यत नातिमहान्सभ्यजनोपयोगस्तेनाभविष्यत्। पश्यत लुप्तां पैशाचीं वृहत्कथां संस्कृतानुवादमात्रजीविनीम्। पश्यत बौद्धादिप्राकृत,

साहित्यगतिं भारते नामशेषां प्राच्यतत्त्वसंग्राहि-कतिपयजन बोधविषयताम्।

किं च देशव्यापिनी संस्कृतसरस्वती न प्रान्तीया। यथा-पुरमद्याप्याकाम्बोजेभ्य आकामरूपेभ्य आनेपालेभ्य आसिंह-लादियम्प्रचरति। गुणगौरवेण पुनः शर्मण्येषु पितृपुरीयेषु सिद्धपुरीयेषु कर्पूरद्वीपेषु चेयं पदमादधानोपलभ्यते। 'पदं हि सर्वत्र गुणैर्निधीयते।' न श्रुतं भवद्भिः पितृपुरीय-संस्कृतमहाभिधानं शर्मण्यपण्डिताभ्यां निर्मितम्! नाकर्णिताः संस्कृतनिर्मिता द्वीपान्तरीयाणां श्लोकाः! न विदितानि श्रीमतां वैदेशिकानि संस्कृतव्याकरणानि! हन्त! भो! देशव्यापिनि जगन्मान्ये संस्कृते यद्विज्ञानं ज्ञानञ्च व्याकरणालङ्कारवैद्यकगणित-दर्शनादिसम्बद्धमुपलभ्यते तदग्निकल्पं जाज्वल्यमानं भवद्भिरुपेक्ष्यमाणमपि तित्तिरिप्रतिमैरद्यापि द्वीपान्तरीयैरालिह्यते। भाषारहस्यं पुराणरहस्यमीदृशानि विज्ञानान्तराण्यपि च वैदेशिकोद्गीर्णानि नूनं नाविरभविष्यन्, न चैतेषामुद्यमिनां संस्कृत-भारत्या भारतभाग्यभूतया परिचयोऽभविष्यत् न चेच्छ्रद्धया-ध्यवसायेन च ते तं परिचयमहरहरवर्द्धयिष्यन्।

सैषा देशव्यापिका सभ्यमात्रगौरवास्पदीभूता बहुविज्ञान-प्रसूः साम्प्रतमपि विज्ञानविशेषान् जनयन्ती नित्यमस्वप्ना भारतमातुर्मुखरूपा संस्कृतभारती नाभ्यस्यते श्रद्धया सर्वैः। न चाभ्यस्यमानापि शुकनिर्विशेषैर्बहुभिः साम्प्रतम्पुरेव मधुराणि फलानि दर्शयति। कस्यापराधः? नास्या भारत्या नित्यजा-ग्रद्गुणमहिम्नः। न शासकानां सर्वदा संस्कृतशिक्षां यत्नपूर्वं महता व्ययेन विवर्द्धयिषूणाम्। न सामान्यजनतायाः विश्वविद्या-

लय-ऋषिकुलगुरुकुलादिकृते कोटीर्वितरन्त्याः। केवलं संस्कृत-भारतीपुत्राणामत्रभवता विदुषामयं दोषो ये—

"कलिरयमिह का स्यादुन्नतिर्हन्तजन्तो-
रतिबलवति दैवे पौरुषं किन्नु कुर्यात्।
अतनिषत चिरत्ना दिव्यशक्त्या निबन्धान्,
किमिह मनुज-शक्तिस्तादृशानद्य कुर्यात्।"

इत्यादि प्रलपन्तो वस्तुविज्ञानं वराहवाग्भटादिभिरनु-सृतमुपेक्ष्य वाग्जालमात्रवितण्डाभिः खण्डयन्तश्छात्रसमयं बहुमूल्यं न पुनरिमां भारतभारतीं वस्तुसम्पद्भिः संयोज्य तद्भक्तांस्त्रिवर्गक्षमान् कर्त्तुमुद्युञ्जते। संहिताभाषां दुरधि-गमामुपलभ्य ब्राह्मभाषया शतपथादीनि भवद्भिरसृक्षत। भगवता कृष्णद्वैपायनेन च ब्राह्मणान्यप्यनुपयुज्यमानप्रायाण्युपलभ्य पञ्चमो वेदो भारतराशिः प्रतिष्ठापितः। बृहत्संहितामाब्राह्मणं आ स्वकालाच्च यद्विज्ञानं तत्संग्रहायेमां निबध्नीयामिति मनसि कुर्वन् वराहमिहिरो निरमास्त। तन्त्राणि रसादिप्रयोगकुशलानि मुनिकुलैरतन्त्र्यन्त। पुराणान्युपपुराणानि चाग्नेयस्कन्दादीनि स्वकालिकस्थापत्यभूगोलादिविज्ञाननिधानानीव न्यबद्ध्यन्त। सिद्धान्तशिरोमणिप्रभृतीनि प्रबन्धरत्नानि जरत्यां भारतावनौ भास्करादिभिः प्रणीतानि।

कृष्णद्वैपायनो यथा सृष्टिमारभ्य युधिष्ठिराभिषेकान्तमिति-हासं न्यबध्नात्, लोमहर्षणिप्रभृतयश्च तमश्रावयन्। कथं तथा भवद्भिर्ब्राह्मणैरद्यापि ज्वलद्बाष्पमयाच्छायापथाद्यस्तारकाणा-माविर्भावस्तमारभ्य श्रीजयोर्जाभिषेकान्तं ग्रहोपग्रहगिरि-वारिधिवृक्षगुल्मरक्षोनरप्रभृतेर्भूतजातस्य विकासवार्ता नाभि-

नवभारते निबध्यते! न च गृहे गृहे वेतनं विनापि श्राव्यते! मन्ये निष्कारणधार्मिका भवन्तोऽप्याङ्गलभाषाध्यापका इव दक्षिणां विना मातृकुलाशनपरीक्षोत्तरणमन्तरेण च नेतिहासादि जनतासु श्रावयितुमिच्छन्ति। हंहो साङ्क्रामिकोऽयं कश्चिद्-दुश्चिकित्स्यो महाव्याधिः। तत्रभवान् वराहार्क आब्राह्मणं आस्वकालाद्यद्यद्विज्ञानजातं तेन निचितां बृहत्संहितामतनिष्ट। श्रीमद्भिरपि कथं न बृहत्संहितीयं तत्परभावि च बाष्पीय-वैद्युत-व्योमयानीयादि-विज्ञानं संगृह्य नूतनसंहिता कापि प्रणीयते! येन भवतां भ्रातरोऽप्यादिसूनुप्रभृतिवत्स्वनग्राहदूरग्राहादि-निर्माणे प्रभवेयुः।

नूनं दारुवीण-कलवीणादयश्चेदृषयोऽभिनवरहस्यदर्शि-नोऽभवन्नस्मिन्नेव कलौ। कथं न तत्सरणिमनुसरद्भिरपि मौनव्रतमीदृशेषु विहाय वास्तवं मुनित्वमवलम्ब्यते। स्कान्दे किल सामाजिकैः कैरपि गर्हणीयं पुराणत्वं भजत्यपि काशीखण्ड-रेवाखण्ड-सह्याद्रिखण्डादिमये प्राय आमानसादासिंहलं देश-जातं वर्णितम्। आर्यमिश्रैरप्यानवजीवभूमेराहरितभूमेरा-तुङ्गातुङ्गार्णवमाशान्तार्णवमामेरुप्रदेशमावडवानलञ्च द्वीपान्त-रीयैरिव तपोनिष्ठैर्महतः क्लेशानविगणय्य प्रवासे भ्रमद्भिः सर्वं वृत्तमुपलभ्य कथं न समस्तेयं वसुन्धरा वर्ण्यते? किं भवद्भिरपि नाभिनवान्याग्नेयमात्स्यपाद्मादीनि वैद्युत-सागरीय-वानस्पत्यादिविज्ञानमयानि प्रणीयन्ते? किं न पितृपुरीयो महाकोशः स्वभाषयानूद्यते भवतां कालकूटीय-प्रयागीयपाञ्चा-ब्ब्वादिविश्वविद्यालयैरनुसन्धानपरायणैः? किं न भवतां कलाकुमारैः कलाध्यक्षैरुपाध्यायैराचार्यैश्च संज्ञामात्रार्थि-

ताविदग्धैर्न जगदीश-प्रफुल्लादि-ऋषीणां सरणिमनुसृत्य नवानि तन्त्राणि प्रतायन्ते? किं न ताक्षशिल-पाटलिपुत्रीयादिविश्व-विद्यालयानुकारीणि कामसेतूक्षप्रतर-वरलीन-परेशपुटभेदनादि-महाविश्वविद्यालयप्रतिस्पर्द्धीनि न केवलं गङ्गाद्वारे किं पुनः सर्वेषु गङ्गागोदावरीनर्मदादिपवित्रापगाकूलोपशल्यनगरेषु सहस्रशः ऋषिकुलानि छात्रायुतपालनाध्यापनक्षमैः कुलपति-भिस्तत्त्वदर्शिभिर्ऋषिभिर्विद्याव्यसनिभिरन्तेवासिभिर्गार्ग्याम्भृणी-प्रतिमाभिर्विदुषीभिश्चालंकृतानि प्रतिपदमाविर्भवन्ति? न पुनस्तमोव्यसनदुर्यशोमसीमालिन्यं भारतवसुधामुखात प्रक्षा-ल्यते। न दुर्भिक्षान्धकूपपतिता बन्धुतानुगृह्यते। न स्वदेश-प्रणयं वैदेशिकभाषाभिर्व्याचक्षाणा धिक् क्रियन्ते। न धर्मध्वजै-र्विलुप्यमानो धर्मः संरक्ष्यते!!

ध्रुवमत्र प्रत्यवतिष्ठन्ते प्राकृतप्रिया वैदेशिकभाषाकुशला अभिनवसम्प्रदायप्रवर्तका उदरम्भरयः करम्भगवेषिणश्चान्ये। वदन्ति च 'भोः! किं लभ्यमनया संस्कृतभाषाया अभ्यस्तया? नाधिकरणे कायस्थपदं सोत्कोचवेतनमियन्दातुं प्रभवति। न न्याय-वादिपदं प्रात्यहिकपञ्चसहस्रशुल्कमेषार्पयति। न मारुतशकटगमनक्षमं शासनसमिति सभ्यपदमियं वितरति। न बाष्पयानेष्वाङ्गलभाषिणमिवैतद् भाषिणं कश्चिदाद्रियते। जलशौचादिप्रायश्चित्त-परम्परा-बहुला पत्रप्रोञ्छनाद्यभिनव-धर्मशिक्षाविमुखी म्रियतामेषा। किमनया जर्जरप्रायया! सर्वं विज्ञानं हिन्दीवङ्गीयादिभिर्वक्तृतादिकं चाङ्गलादिभिः प्रख्या-पयिष्यामो धनमप्यर्जयिष्याम इति।'

तानेतान्महाशयान् शयेऽप्याशयेऽपिस्थौल्यवतः प्रतिवच्मः—

,किं न भोः। किं धनमर्ज्यते भवद्भिः! गृहं क्षेत्रं विक्रीय त्रिंशन्मुद्राः प्रतिमासं क्षपयित्वा शरीरे ज्वरं मनसि लोभं रसनायाञ्च कतिपयान् कटूञ्छब्दानधिगत्य पताकादर्शकस्य चाटुकारस्य वा पदं प्रतिशतमेकेन भवतां लब्धं चेत्किं तेन? न सर्वे न्यायवादिनो वरास्तरा रासविहारिघोषवदयुतार्जकाः। प्रचुरा जरत्कर्पटास्तरा अधिकरणोपकण्ठतरुसेविनो मक्षिकापसारणमात्रकृत्याः।

ये किमप्यर्जयन्ति, ते देशमेव भक्षयन्ति, दुर्भिक्षार्दितान् कृषकान्कर्षयन्तश्च विवादपदशतार्थे सहस्रव्ययं कारयन्तो बन्धून्निरये निपातयन्ति। त्यज्यतां कलाकुमारपदवीमासाद्याधिकरणिकपदलाभास्था। परीक्षाणां तृणप्रायत्वात् कलाकुमारसंख्याबाहुल्यान्मृगतृष्णिकैषा। हरिकीर्तनेन कथका यद्धनं सुखं वा बहुव्ययमकृत्वापि लभन्ते, यं च मनोविनोदं कुर्वते जनतायाः, धर्मशिक्षया च यमुपकारं कुर्वन्ति बन्धुतायाः, न तत्सर्वं स्वप्नेऽपि गम्यं कलाकुमारस्य कलाध्यक्षस्य वा। अद्यापि वैद्याश्चरकादिपाठेनैव लक्षाण्यर्जयन्ति। समपथान्यपथजलपथादिचिकित्सादुस्साध्यानि च जलोदरादीनि शस्त्रप्रयोगं विनैव सितशर्करामिश्रक्षारोपयोगेन शमयन्ति। किं च

'न ना उ देवाः क्षुदमिद्वधं ददुरुताशितमुपगच्छति मृत्यवे'

इति ऋग्वर्णो भिक्षुः ऋषिणा दृष्टो नाकर्णितः श्रीमद्भिः! अश्वस्तनिकाः सक्तुमूलकजीविनो ग्रामीणपण्डिताः शतायुषः सप्ततेः पूर्वमुपनेत्रविमुखाः यथा सुखिनः, किं तथा युवजरती द्वादशवर्षादुपनेत्रे रात्रिन्दिवं दधाना तालरसादिपावनामृतप्राणयापि कलाकुमारमर्चिचका चत्वारिंशत्परमायूराशामात्र-

कृतार्था कल्याणिनी कदापि संभाव्यत! हन्त। तद्विरम्यतामतिप्रसंकादधीत्य संस्कृतम् तत् संस्कृतया मातृभाषयैव सर्वं शिल्पादि विधीयताम्, वाणिज्यादिभिर्देशः सनाथीक्रियताम्। न रिक्तानि दास्यस्थानानि। किं परमुखापेक्षया! रौमकयावनाख्यसंस्कृताद्याकरभाषाणामध्ययनमाङ्ग्लशर्मण्यादिमातृभाषासंस्कारायैव कुर्वते पाश्चात्त्याः।

वैज्ञानिकदार्शनिकादिशब्दसंग्रहो हि दुष्कर आकरभाषाभिज्ञतां विना। तथैव भवन्तोऽपि चेष्टन्ताम्। यावज्जीविकमाङ्ग्लादिभाषाभ्यासः क्रियतां न पुनर्जीविकाव्याजेन गृहविक्रया। यावस्तुतत्त्वानुवादाय द्वीपान्तरीयभाषासु परिचयो विधीयताम्, न पुनर्व्यवहारकलिसमुत्तेजनया देशभक्षणाय वा। सरलभूगोलादिविज्ञानं कलाशिल्प-वाणिज्यादिव्यवहरणञ्च प्रान्तीयभाषाभिर्भवतु। सहैव तु सर्व्वैर्णदृशेन व्यवहारेण देशे गभीरं दार्शनिकज्ञानं ज्योतिर्गणितादि गरीयो विज्ञानम्, तदर्थं देशव्यापिनोऽप्रान्तीयपारिभाषिकाः शब्दा देशमान्यञ्च प्रबन्धजातमितीदृशमपरमपि प्रचुरमपेक्षितम्।

यथा देशे किलाख्य-यूरोपीयचिकित्सासु सतीष्वपि तत्पार्श्वेऽद्याप्युदारतरायुर्व्वेदप्रणाली साम्प्रतमपि वरीवर्ति, तथा स्थापत्यादिष्वपि स्वतन्त्रा देशीयाः पद्धतयस्तावन्न भविष्यन्ति यावत् संस्कृतग्रन्थास्तद्विषयका अनुवादद्वारेण प्रान्तीयभाषासु चरकादिवत् सञ्चरन्तो न दृश्यन्ते। वैज्ञानिकपरिभाषैक्यमपि देशमात्रे संस्कृतमूलकमेव सम्भाव्यते, संस्कृतस्य सर्वोपजीव्यत्वात्। प्राकृतानि तु न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हतीति न्यायमनुसरन्ति न परस्परोपजीव्यानि अत एकस्यां

प्रान्तीयभाषायां यो विज्ञानकोषो न स्वभाषान्तरे स्वीकृतिं लप्स्यते। न च गाम्भीर्यमपि तादृक् प्राकृतभाषाणां येन तदीया निबन्धा मध्यमकालिकान् भ्रमान् दूरीकर्त्तुं प्रभवन्ति। न वा भारते कियद्गणितमित्यादि पृष्टः कोऽपि मिडिलपरीक्षागणित-पुस्तकं दर्शयित्वा कृती भविष्यति। सिद्धान्तशिरोमणिमेव तु शरणीकरिष्यति। स च सिद्धान्तशिरोमणिर्न चेत्पुनर्नवीक्रियते, न तत्र सर्व्वं साम्प्रतिकाङ्कगणितमिति महत्परिहासस्थानं भविष्यति द्वीपान्तरीयाणाम्।

तदेतत्सर्व्वमभिसन्धाय प्राच्यग्रन्थानामांग्लानुवादं विहाया-भिनवाः संस्कृतसंहिताः प्रणीयन्तां विविधभाषाभिज्ञैर्देश-हितैषिभिः। द्यूतनृत्यादिव्यसनानि विहाय स्थाप्यन्तां कोटीशैः कुलपत्याश्रमाः। मतभेदवादरसिकत्वं परित्यज्य सर्वैर्धार्मिकैः प्रवर्त्यन्तां धर्मसत्राणि छात्रोपयोगीनि।

"विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्य्यतः।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः॥"

इति मानवीङ्गिरमनुसरद्भिरशूद्रत्वकामैः शुचा द्रवीभावं परिजिहीर्षुभिर्जन्ममात्राभिमानमपहाय ज्ञानाय, धनाय, बलाय च प्रतिनगरं प्रतिग्रामं प्रतिपल्लि स्थापितेषु धर्म्मक्षेत्रेषु स्वयं-प्रयत्यतामन्येषु च ज्ञानस्य धनस्य बलस्य प्रचारमारचयद्भिः स्वार्थपरार्थोभयसाधनरूपपरमार्थनिष्ठैरुद्ध्रियतां भारतभूर्दुर्भिक्ष-महामारीप्रत्यक्षनिरयात्।

परिरक्ष्यताञ्च संस्कृतभारती स्वदेशेऽपि देशान्तरेष्विव न हि जननी परपुत्रोपजीव्या स्वपुत्रकृतामुपेक्षामर्हति।

## ३. 'पुराणमित्येव न साधु सर्वम्'

इह जगति नास्त्यभावोऽधुनापि ईंदृशां जनानां ये प्रमाणरूपेण पुराणमिति कथनं पर्याप्तं : . ; यावज्जीवं ते पौराणिकरीतोरनुसरन्तः निजविवेकशून्यतायाः परिचयं ददति। अनेकाः प्राचीनरीतयोऽधुना हास्यास्पदमेव। ताः परित्याज्या एव। केवलं ते प्राचीननियमाचारव्यवहाराश्च ग्रहणीया येषामधुनापि निजबुद्धिव्यापारेण वयं त्रुटिं न पश्यामः। पुराणे साधुत्वस्य नास्ति विहीनता किन्तु पुराणमित्येव न साधु सर्वम्।

आवश्यकतानुसारं पुरुषाः कार्यपद्धतिं निश्चिन्वन्ति। यथाहि—पुरा विद्यार्थिनो गुर्वाश्रमे निवसन्तो भिक्षया, गोपालनेन, कृष्या वा जीविकोपार्जनमकुर्वन्, वन्यफलैरेव वा मासाननेकान् यापयन्ति स्म। यद्यर्वाचीनविश्वविद्यालयस्य कोऽपिच्छात्रः पूर्ववदाचरणेन एम्० ए०—बी० ए० उपाधिमिच्छति, स चञ्चुसिकताभिः महासागरमुच्छोषयितुकामः पक्षीव यतते। स्थितिरेव सम्यक् परिवर्तिता। पूर्वजानामनुकरणेन बहवः हास्यास्पदं भवन्ति। एकदा कापि वृद्धा दुर्गां पूजयन्ती आगतान् त्रीन् बिडालान् पिटकैरवरुद्धवती। पश्चात् वृद्धामरणोत्तरं तस्याः पुत्रवधूस्तामेव पूजां कुर्वंती प्रथमं बिडालत्रयं ग्राहयित्वैव सिद्धिममन्यत। इत्थं स्पष्टमेव यत् पुराणानुकरणे तर्कबुद्धेर्महत्यावश्यकता वर्तते। अन्यथा निरर्थकमपि कर्त्तुमुद्यता भवन्त्यविमृश्यकारिणः।

सर्वङ्खलु पुराणं यदस्माकं पूर्वजैरुचितरीतिरिति व्याख्यातं

क्तञ्च। तेषां व्यवहारेषु नीतिषु च तत्कालपरिस्थिति-व्यस्थावश्यकतानाञ्च प्रभाव: स्पष्टमेव लक्ष्य:। अथ न किं तेषां बुद्धिपरिमितिरपि यदा कदा निम्नाभिमुखं मार्गमनुसतुं कारणमभूत्। इदमेव दृष्ट्वा कुशलकविना निर्दिष्टमेवैतत्—

वेदा विभिन्ना: स्मृतयो विभिन्ना:
नासौ मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायाम्
महाजनो येन गतः स पन्था:॥

पुराणरचयितारोऽथवाचारग्रन्थकारा: केवलमस्माकं सहायतायै मार्गदर्शयितार: सन्ति न तु 'पुराणं साधु' इति वादिनामपि सम्यग्दर्शनाय पुराणपद्धतय: वर्तन्ते।

तत: स्पष्टं यदिदं पुराणमिति अवश्यं मानयितव्यमथवेदमाधुनिकमिति नास्ति पुराणवदादरणीयमिति सङ्कीर्णमतीनां कथनम्। इदानीमपि वहवो विद्वांस:, बुद्धिमन्तश्च सन्ति, येषां कार्यावलिरनुकरणीयगुणोपेता। नास्ति नवीनतायां कश्चिद्दोष:। पुराणमपि तथा दोषगुणयुक्तं यथाधुनिकम्। प्राचीनकालेऽपि गर्ह्यचरित्राणां नासीदभाव:।

प्राचीनवैदिकयुगे गोभोजनमुत्सवायातिथिसत्काराय च प्रशस्तमासीत्। न हि 'पुराणमिति' कथयतां तस्या रीत्या: पुनरप्युद्धरणेऽस्माकं बुद्धिमत्ता। अनेका रीतय: केवलं परीक्षार्थमेव प्रचलिता भवन्ति। अस्माकमभ्युदयाय तासां प्रचलनं नास्तीति विमृश्य लोक: ता: परित्यजति। प्राय: पुराणव्यवहृतानामपीदृशामाचाराणां निषेध उचित एव।

यवनागमनात्पूर्वं भारतदेशे स्त्रीषु अवरोधप्रथाया: प्रचलनं

नासीत्। तषां यवनानां कुदृष्टेर्भारतीयललनानां सुरक्षैवासीदस्या अभिप्रायः। इदानीं किमपि कारणं न विद्यते यत् स्त्रियः प्रकाशवायुप्रकृतिभ्यो वञ्चिता भवेयुः। शीघ्रमेवास्याः कुरीतेरुन्मूलनं भविष्यति स्त्रीणामारोग्यवर्द्धनाय। बुद्धिविहीनतयैव जातिप्रथाया ईदृशं प्रचलनं सम्भूतम्। यदि तर्कप्रणाल्या प्राचीनविषयः प्रतिपादिताः सर्वथैव ते ग्रहणीया, अन्यथा तेषामुपेक्षैवास्माकं योगक्षेमायास्ति।

कर्तव्याकर्तव्यनिर्धारणे पुराणस्य सहायतानुपेक्षणीया। किन्तु सर्वदा कूपमण्डूकवत् पुराणमेवान्तिमनिदेशकमिति मन्तारः नोन्नतिं कर्त्तुं समर्थाः। सर्वदैव महाजना अनुकरणीयाः। परन्तु के महाजना इति विवादविषयः। पुरुषोऽन्ध इवान्यैर्निर्दिष्टे पथि गच्छन् न महत्त्वमाप्नोति। स्वीयबुद्धेर्महत्युपयोगिता कार्यनिर्धारणे वर्तते। नहि पुराणे सर्वं साधु वर्तते। सारग्रहणं निस्सारस्य परित्यागमेव करोतु विद्वानिह जगति, परलोके वाभ्युदयनिःश्रेयससिद्धये।

## ४. "चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च"

दुःखसुखचक्रमारूढोऽयं संसारः। शरीरिणं कदाचिद्दुःखमनुवध्नाति, कदाचित्सुखम्। जन्मी जगतीह विधात्रा जन्मपर्यन्तं केवलमेकमेव सोढुं नादिष्टः। सुखमप्याजीवनं लभ्यते। अञ्जसा दुःखसुखाविरहितं सर्वविश्वम्। यदि जन्तुं दुःखमनुसरति तदा सुखमपि तं वृणुते। क्षणे-क्षणे विश्वचत्वरे या घटना घटिता भवन्ति, ता अवश्यमेव नूतनत्वमलौकिकत्वं च शंसन्ति। चिराय न कस्यापि वस्तुनो विद्यमानता। योऽद्य रुक्मभूषितं शयनमधिशेते, यमारिराधयिषवोऽनेके भृत्या अहमहमिकया प्रधावनं कुर्वन्ति, प्राप्तसम्पदालोकं यं लोको नमस्करोति च, स एव काले सकलकलाकलनेन कालेनाक्रान्तो भूत्वा चेखिद्यते, परैर्वितीर्णां वृत्तिं भुङ्क्ते वा। योऽद्यनानाकष्टापन्नो विगतविभवोऽधिगतपराभवश्च वर्तते, स एव समये कष्टोदधिं तीर्त्वा धनं कीर्तिं च प्राप्नोति।

इतिहासानुसारमनेकान्युदाहरणानि स्वर्णाक्षरैर्लिखितानि सन्ति यैर्दुःखस्य सुखस्य च रूपं साधु ज्ञायते। स्वकान्तया साकं लीलां कुर्वाणो यक्षो बहु सुखमाततान प्रथमे वयसि। अथ दुःखमपि तं बबाधे। स्वप्रियाया दूरेनिवसन्, प्राक्तनसुखमनुभवन् यक्षो दारुणवियोगाग्नौ जज्वाल। प्रथमं सुखं तदनुदुःखं तं वरयाञ्चकार। साधूक्तं महाकविना कालिदासेन मेघदूते—

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।।"

समृद्धिभिरिद्धो नृपेन्द्रो हरिश्चन्द्रोऽपि प्रथमं निःस्वो भूत्वा वह्निज्वालाञ्चितायाञ्चिताभूमौ कुत्सितं कर्माङ्गीचकार। तदनु जगामैन्द्रं पदं स्वमहिम्ना। लोकविपद्विरामो रामोऽपि पद्भ्यां कण्टकसंकुले घोरे कान्तारे पर्यटनं कुर्वन् दीर्घं क्लेशमवाप पश्चाद्राज्यासनं समलञ्चकार च। जगज्जननी जनकनन्दिनी अटव्यामटन्ती तरक्षूणामट्टहासमपि सहासं शुश्राव, लङ्केश्वरस्य कटुक्वणन्तीभिर्वाग्भिरधिक्षिप्ता च। अथ सा सुखमनुभूयापि प्रियेण परित्यक्ता। येषां रणपण्डितानां पाण्डवानां मन्युवह्निना मलिनीकृताः सकला दिशश्चुक्षुभुस्तेऽपि नृपेन्द्रोत्तमाङ्गस्रक्परागपूजिताङ्घ्रयः कठिनाकृतयः पाण्डुसूनवो वने वासं द्वादश वर्षाणि कुर्वन्तोऽशिवान् शिवारवान् शृण्वन्तश्च किञ्चित्कालं विराटस्यावासे कैङ्कर्यमपि स्वीकृतवन्तः। तदनु समुत्सारितारिवारास्ते सुखेन राज्यमकार्षुः। आजन्म सुखमनुभूयापि रामदुःखदुःखितो नृपो दशरथः कष्टेनैव मृत्युदिवसान् यापयामास। अजो राजा साकमिन्दुमत्या रममाणः स्वं भाग्यवन्तं मेने, परन्तूपरतायामिन्दुमत्यामुच्चै रुरोद। अप्रतिमप्रतापः प्रतापसिंहो नृपो भूत्वाऽपि कुटुम्बकैरनुगम्यमान सुचिरमुवासारण्ये कष्टं प्रपेदे च।

नियमोऽयं व्याप्नोति नाकलोकस्थितानांत्रिदशानां मध्येऽपि। कदाचित् वृन्दारकवृन्दानि कल्पतरुकुसुमावचयं कुर्वन्ति कदाचित् क्षीणे पुण्ये मर्त्यलोकं प्राप्य कण्टकमेव चिन्वन्ति। अप्सरसोऽपि शक्रसद्मनि स्वनृत्तगीतिपरम्परादिक्रियाभिर्विकर्षयन्त्यमोघमानन्दं परन्तु काले भुवि दुःखं सोढुमवतरन्ति। सुलभकोपेन दुर्वाससा शप्ता सरस्वत्यपि मर्त्यलोकमेकदावततार। यः पार्वणो

विधुः स्वप्रसन्नैः कलाकलापैर्नक्तमाकाशप्राङ्गणं मण्डयति, लोकं प्रीणयति च, स एव शुभ्रां कलां विजहात्युदिते दिवा दिवाकरे। न केवलमेतदेव, परन्तु कदाचिद् वारिदेन वलादाच्छाद्यते, कदाचित् सैंहिकेयेनापि ग्रस्यते च। यदा-कदा दिनेशोऽपि वलाहकैर्विषयीक्रियते, राहुणा ग्रासीक्रियते च। दिधक्षुरिव चण्डांशुभिरसून् देहिनां रविर्दिवसेऽत्यन्तमातपति निदाघे परन्तु प्रत्यहं सायं दैवदुर्विपाकादञ्चत्यस्ताचलम्।

प्रकृतिरपि दुःखैरभिभूयते सुखैरलङ्क्रियते च। सहकारमञ्जरीं विकासहर्षप्रकाशमुखरा मधुकराश्चैत्रेऽकुतोभयास्सन्तो विभ्राजन्ते, परन्तु शीतकाले विपरीतां दशां भजन्ते। प्रावृषि प्रवाहैर्वहन्त्यो धुनयः कलकलध्वनिभिर्दिगन्तरालं पूरयन्ति। परन्तु ग्रीष्मकाले कार्श्यमाप्नुवन्ति। वर्षाकालेऽनिशं नदन्तो जलदानविचक्षणा अम्भोदाः समस्तां धरामासारैरार्द्रयन्ति। परन्तु शरदि त एव मेघा निर्जलत्वाद् याचकेभ्यश्चातकेभ्यो मनागपि पयोदानं कर्त्तुं न शक्नुवन्ति। मधुरया केकया लोकं कामप्यवस्थां प्रापयन् मयूरो जलदागमे सुखी वर्तते। परन्तु शरदि लोकैरुपेक्षितो भूत्वा खिन्नाननः सन् सीदति। अनेकपादपलतापुष्पसम्पत्तिसनाथीकृतोपवनश्रीर्वसन्तेऽपूर्वां शोभां श्रयते परन्तु कालान्तरे किं विगतविभवा भूत्वा दुःखजन्यं भावं न सूते? यानि सौरभेणेन्द्रियाणि तर्पयन्ति, यानि कान्तिभिश्चक्षुष्मतां चक्षूंषि नन्दयन्ति, तानि कमनीयकुसुमान्यपि वृन्तात् शैथिल्यमवाप्य, एकपद एव निपत्य वसुधाक्रोडे लुठन्ति, अगणयित्वैव धूलिधूसरितं सम्मृद्यन्ते च। स्वरुचा कामिनीनामङ्गकानि समलङ्कुर्वदपि न सर्वथाऽस्ति पारेदुःखपारावारं कार्त्तस्वरमपि यतस्तदपि सन्दीपिताग्नौ

ध्मायते। पम्फुल्यमानानि जलजवनान्यपि सूर्यतीक्ष्णांशुपावके पतङ्गायितानि सञ्जायन्ते। अनल्पोदकपूर्णं सरोऽपि ग्रीष्मे जीर्णोद्यानायते। यो भास्करः समस्तं भुवनं दहति निदाघे, स एव शीतसमये हिमेन हस्तीक्रियते। यः शारदो मृगलाञ्छनोऽतीव तोषं जनयति जनानां स एव शिशिरे तुषारेण पीड्यते। वसन्ते प्राभातिको वायुः प्राणिभ्यः सुखं प्रयच्छति परन्तु ग्रीष्मे पावकमुद्गिरन् मानसं दुःखाकरोति। स एव पवनो हेमन्ते प्राणिनं विधुन्वन् भयं जनयति च।

यौवनचुम्बितविग्रहा दानधाराधुरन्धराः कुञ्जरा मदजलैर्नैकान् भ्रमरानाकर्षयन्तः सुखमनुभवन्ति। परन्तु तेऽपि दुःखस्य पात्रं सन्ति यतो मदक्षीणांस्तानपहायेतस्ततः किमपि प्रचलन्ति मूढा मधुपाः। यदा तीक्ष्णैर्नखाग्रैर्विकटगजकटानां विपाटनं विधाय मतङ्गजं मृगेन्द्रो भूमौ विपोथयति तदा नूनं नैजं शौर्यं प्रति अभिमन्यते सुखमनुभवति च, परन्तु वार्धक्यवशीभूतोऽसावेवैकस्मिन् काले मृगमपि व्यापादयितुं न प्रभुः। सफलाः सपुष्पाः सपत्राश्च वृक्षाः सुखं निवसन्ति परन्तु तेऽपि दुःखैर्जीर्यन्ते यदा त्यक्तकुसुमाः फलरहिता विपत्राश्च समवलोक्यन्ते। पुष्पोत्करविभूषिता, शस्यसम्पत्तिसमन्विता वसुधापि मरुभूमीः क्रियते। कष्टमस्ति यच्चक्रवाकः प्रियया सार्धं दिने क्रीडति परं रजन्यां प्रियया हीनो भूत्वा दूयते।

"कालक्रमेण जगतः परिवर्तमाना
चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः"

इति बभाषे कविताकामिनीहासो भासः। भाग्यस्य न कदापि चिरस्थितिः। नित्यं दिनादनन्तरं रात्रेरवस्थितिः। यत्र प्रकाशो

वर्तते तत्र तमसोऽपि विद्यमानता। यदि धरायां धाराः पतन्ति तदा रजःप्रसरोऽपि दृश्यते। दुःखमनुभूयैव सुखं शोभते। यथा घनान्धकारे दीपोऽपि महान्तं प्रकाशमातनोति तथा दुःखसमूहे सुखमपि चकास्ति। यथा अपां द्रवत्वम्, उर्व्याः कठिनत्वं, वायोश्चलत्वं, पावकस्यौष्ण्यं प्रथितं वर्तते तथैव प्राणिनोऽपि दुःखं सुखञ्च धर्मः। मनुष्यो बाल्ये वयसि स्वैरं कर्म कुरुते। स एव युवा भूत्वा कामक्रोधपापेर्ष्यादिकर्मायत्तः सन् दुष्कृतमाचरति, वार्धक्ये करणासामर्थ्यात् रोदिति। एकस्मिन्नेव जीवनकाले मनुष्यस्यैतादृशी दशा। कदाचिद् विपद्ग्रस्तो भवति, कदाचित्सम्पदाऽऽद्रियते च।

भारतदेशोऽपि अनेकशः सुखैरभूषि, दुःखैः संछादितश्च। यदा योगीन्द्राणां योगप्रभाभिर्लोकलोचनानि व्याकुलीकृतानि, यदा भूरिपुण्या भूपाला राज्यं चक्रुः, यदा वेदध्वनयः समाकर्णिषत, यदा केवलं धर्मेणैवास्य देशस्योरःस्थले पदमकारि, यदा रथ्यासु रत्नानि लुलुठुः, यदा भारतदेशः समस्तं भूमण्डलं शशास तदा देशेनानेन सुखमन्वभावि। किञ्च यदा कालुष्यकषायितचेतोभिर्यवनैर्धनानि लुण्ठितानि, यदा शत्रुभिरात्मीकृतः, यदा संस्कृतिरस्य मुषिता, यदा अस्य वसुधा सपत्नहयानां खुरैः क्षुण्णा भूत्वा व्यदीर्यत, यदा रिपुचन्द्रहासच्छिन्नकन्धराणामस्य वीराणां पुत्ररत्नानां कदुष्णैः शोणैः रणक्षोणी अपि शोणीकृता, यदा वीराङ्गना धर्मरक्षणार्थं स्वजीवितान्यपि चितायै समर्पयाम्बभूवुस्तदा नूनमस्य देशस्य दुःखं ववृधे। यादृशी पुरातनी दशाऽऽसीदस्य देशस्य न तथा साम्प्रतिकी दशा।

अनेनैव प्रकारेण देशान्तराणामपि दशा यूनानरोममिस्र-

वेबिलोनियादिदेशाः पुरा अत्यन्तमेव समृद्धाः, संस्कृताः, सभ्याश्चासन्, तेषां का कथा आधुनिकी। तेऽधुना पतनसरणिमवलम्बन्ते परेषां निदेशं परिपालयन्ति च। येषाममरीकारूसेङ्गलैण्डदेशानां नामापि पुरा सभ्यदेशानां पङ्क्तौ स्थितिं नाकलयत, येषां मनुष्या असभ्या आसन् त एवाद्य विश्वेषामग्रेसराः। तेषां मनुष्या एव विधातारमप्यतिशयानाः संलक्ष्यन्ते। त एव शस्त्रास्त्रशास्त्रस्रष्टारः। तेषामेवोन्नतिरनुदिनं बोभवीति। तेषामेव विजयपताका विश्वरङ्गे दोधूयते। त एव राकेट-हाइड्रोजनैटमबम्वादिशस्त्रास्त्रवडवाग्निभिः प्राणिनामायुर्जलान्यपि पातुं कामयन्ते। अनेन समर्थितं मतं यन्न समाना दशा कस्यापि देशस्य, कस्यापि प्राणिनो वा।

सरतीति संसारः। पुरा संसार एवासभ्य आसीत्, परन्तु कालक्रमेण परिवर्तते। यत्र तुङ्गानि हर्म्याण्यासन्, तत्र चिताभूमिर्दृश्यते। यत्र नद्यः प्रवहन्तिस्म तत्र मरुस्थली परिलक्ष्यते। नैकानि वनानि ग्रामीकृतानि,नैकानि मन्दिराणि मन्दरीकृतानि। काल एव कदाचिद् दुःखव्याजात्, कदाचित् सुखव्याजात् सर्वान् नर्तयति। प्राणी कदाचित् सुखं, दुःखं च प्राप्नोति। दुःखस्य सुखस्य च समाना स्थितिः। चक्रनेमिक्रमेण दुःखानि सुखानि च परिवर्तन्ते। अतः सत्यमेव समुदीरितं केनचित् महाकविना—

चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च।

## ५. आदिकविर्वाल्मीकिः

अथाऽयं सर्वोऽपि मानुषो लोकः अन्धतमसेनान्धोऽभविष्यत् यद्येतत् शब्दाह्वयं ज्योतिरासंसारान्विर्भावान्नादीपिष्यत। नैको-पाध्युपहितेनानेन शब्देन ज्योतिषा स्वमज्ञानान्धतामिस्रमपा-कुर्वतामेव हि मानुषाणां मनुष्यता आत्मानं लभते। अन्यथा प्राणिमात्रसधर्मणामेषां किङ्कृता वा स्यान्महत्ता वान्येभ्यः प्राणि-वर्गेभ्यः ! परन्तु शब्दोऽयं विश्वस्य श्रेय इव तन्नाशमपि प्रभवति कर्तुम्। दृश्यते हि लोके यज्ञप्रकाशादिपूपात्तस्याग्नेः गेहदाहा-दावप्यनिष्टे कर्मण्युपयोगः। अतश्चेदं विचारणीयं प्रेक्षावतां यदेतदेते शब्दाह्वयं ज्योतिर्विश्वकल्याणायैवोपयुञ्जीरन्, न तदन्यथेति। को वाऽत्र पन्था विश्वकल्याणस्येति दर्शयितुमेव प्रावर्तत प्रभुसम्मिता वेदत्रयी। तत्र दर्शितमेव च पन्थानमनु-वर्तन्ते मित्रसम्मितानि पुराणानि, काव्यानि च कान्तासम्मितानि। तदेवं वेदपुराणकाव्यानां यथाक्रमं प्रभुमित्रकान्तासम्मिततामुप-वर्णयद्भिः प्रायो विस्मर्यत इवास्माभिर्यद्वेदानन्तरं प्रथममेव स्थानं काव्यस्य न पुनर्द्वितीयमिति। यत औत्पत्तिककालक्रमानु-सारेण लोकोत्तरानन्दसंधायकतावशेन च काव्यस्यैव प्राथम्यं पुराणात् विदिततरमेव हीदं सर्वेषां यत् पुराणकर्तुर्द्वैपायना-द्रामायणकविर्मुनिर्वाल्मीकिः पूर्वतर इति। वैदिकच्छन्द इदं प्रथमतया लोके प्रवर्तयन्नयमेवादिकविव्यपदेशभाजनतां गतः। अतश्च नूनं महतीयमाहोपुरुषिका काव्यस्य यदनेनाक्रम्यते वेदसमनन्तरमाद्यमेव स्थानं वाङ्मयप्रपञ्चे।

काव्यं नाम कवयितुर्मानसिकस्सृष्टिविशेषः। तत्र च कवे रसपरिप्लुतहृदयता, लोकसमालोकननैपुण्यं वर्णनाचातुरी च सममेवोपकारकतां भजन्ते। दृश्यन्ते हि नैके जनाः येषां किल लोकालोचनविदग्धानामपि वर्णनविधावैधुरी कवितादारिद्र्यमापादयति, येषां वा दर्शनवर्णनलब्धवर्णानामपि रसावग्रहशोषितहृदयानां कविता नीरसतामेव सर्वतः सञ्चारयति। यथाहुर्भट्टतौताः—

"दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः।
तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।
नोदिता कविता लोके यावज्जाता न वर्णना॥"

अग्निपुराणकर्त्तारश्चाहुः—

"शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥"

शृङ्गारीति चात्र सरसहृदयतायाः रसनिर्वहणचातुर्याश्चोपलक्षणम्। तदेवमिदं पूर्णतया समुदितेयमेकतो गुणत्रयी तपःस्वाध्यायनिरतं तपस्विनं वाल्मीकिं समुन्नतं महाकविपदमध्यारोपयति।

पुरा किल स भगवानात्मसञ्चारपावितलोकत्रयो देवर्षिर्नारदस्तपोदग्धकलुषस्य ब्रह्मनिष्ठस्य तत्रभवतो वाल्मीकेराश्रममुपजगाम। तं च कृतातिथेयं समलंकृतासनं देवर्षिमुपसृत्य ब्रह्मर्षिर्वाल्मीकिः लोकोत्तरपुरुषचरितं श्रोतुकामोऽपृच्छत्—

"कोन्वस्मिन्साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः॥"

देवर्षिश्च तत्प्रश्नप्रत्युत्तरतया भगवतः श्रीरामचन्द्रस्य चरितं तं

संक्षेपतः श्रावयित्वा यथेष्टमगमत् । तत्कथाश्रवणसमाकृष्ट-चेताश्चासौ प्राचेतसः पुनः पुनर्मनसा तामेव कथामनुसन्दधानः माध्याह्निकं सवनमनुष्ठातुं शिष्यैः परिवृतस्तमसामापगाम-गात्। नदीतीरे तस्मिन् कस्यचिन्महीरुहस्याग्रे सुखं विहरतः क्रौञ्चमिथुनात्पुमांसं विहङ्गं कश्चिद् व्याधः पश्यत एव तस्य महामुनेः विव्याध। रुधिरपङ्के विचेष्टमानं तमात्मनः प्रियतमं दृष्ट्वा क्रौञ्ची सा तथा सुदीनतरमाचक्रन्द यथा सर्वमेतदवलो-कयतो वाल्मीकेर्हृदयमतितरां करुणया द्रुतमिवासीत्, येन अचिन्तितमेव तस्य वदनान्निस्ससार काचिन्मनोगतं शोका-वेशमिवोद्गिरन्ती छन्दोमयी वाणी !

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥"

तदेवमिदंप्रथमतया आत्मनो वदनान्निस्सृतया वैदिकेन च छन्द-सोपस्कृतया गिरा नितरां विस्मृतान्तरङ्गः स वल्मीकप्रभावो मुनिः भूयो भूयस्तामेव दिवसावशेषमनुध्यातवान्। अत्रान्तरे स भगवांश्चतुर्वदनो ब्रह्मा तमनुग्रहीतुमागतः । तस्योद्विग्नतायाः कारणं परिज्ञाय च स वैदिकच्छन्दसो लोकेऽवतारो विश्वकल्याणा-येति प्रकटयन्—

"रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम।
धर्मात्मनो भगवतो लोके रामस्य धीमतः।
वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥"

इति तमादिदेश। तदीयाज्ञां शिरसा गृह्णन्नसौ महामुनिः—

"उदारवृत्तार्थपदैर्मनोरमैस्तदास्य रामस्य चकार कीर्तिमान्।
समाक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारदर्शनः ॥"

यत्किल काव्यं समपादयदात्मन आदिकाव्यतां, वाल्मीकेश्चादिकविताम्।

'आद्यकाव्यम्' 'आदिकवि' रिति च तदैवान्वर्थतामुपेयातां, यदा तदनुसारीणि नैकानि काव्यान्युद्गच्छेयुः, तमेव च अनुसरन्तो नैके कवयः ग्रन्थान् विरचयेयुः। अन्यथा 'आदिकाव्यमिदम्' इत्यादयो हि प्रयोगाः केवलं व्यपदेशिवद्भावेनैवोपपद्येरन्। वाल्मीकेराद्यकवित्वे, तत्कृतेर्वा रामायणस्याद्यकाव्यत्वे न कस्यापि विप्रतिपत्तिः। यतः सकलकाव्यलक्षणोपबृंहितस्य, वस्तुतः काव्यलक्षणनिर्मितिनिदानस्य—'लक्ष्यं हि परामृश्य भवति लोके लक्षणम्'—एतादृशस्य महाकाव्यस्यैतत्पूर्वतया निर्मातुराद्यकवित्वे कस्य नु विदुषः संदेहः स्यात्। प्रतिपदरसपरिप्लुतायाश्चास्याः कृतेर्महाकाव्यत्वमङ्गीक्रियते कविकुलकोकिलेन कालिदासेन सहृदयशिरोमणिना चानन्दवर्धनेनेति का वार्तान्येषाम्। करुणरसपरत्वमेवास्य काव्यस्य सूचयता कालिदासेन रघुवंशे वर्णितम्—

"तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः॥"

ध्वनिकारेणापि कालिदासमेवाऽनुरुन्धता विस्पष्टं प्रतिपादितम्—

"काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥"

तदेवमाद्यन्तं परिवहन् रसनिष्यन्दः, उपमोत्प्रेक्षारूपकादीनामनुत्तमासुषमा, पदशय्या नितरां मृद्वी, मृद्वीकालज्जापकः पाकः, सर्वत्रपरिस्फुटास्वादः प्रसादः, वर्णनसम्भाषणादिषु यत्नतःपरिपालितौचिती, क्वचित् क्वचिच्छशिकलामौग्ध्य-

मिवोपहसन्ती वक्रोक्तिः, सर्वत्र च सहृदयहृदयङ्गमो व्यङ्ग्य-महिमा, महिमानमपूर्वं सम्पादयन्तोऽस्य ग्रथस्य न केवलं काव्यानां काव्यशास्त्रस्यापि मूलपुरुषताम् अत्रभवतो वाल्मीकेरुपकल्पयन्ति। को नु वास्ति काव्यशास्त्रसिद्धान्तः, यो ह्यस्मिन्महाकाव्ये सुदृढमालम्बनमात्मने नोपलभेत ! को नु वाऽभवद् भवति भविष्यति वा कविशब्दभाजनं यो हि नामानेनादि कवेः काव्येनेषदपि वा नानृणः !

"अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः॥"

इत्यादिना आत्मनः काव्यरचनायत्नं कथञ्चित् समर्थयन् कविकुलगुरुः कालिदासोऽपि बिभेतीव वाल्मीकेः पुरतो लेखनीं चालयितुम्, अङ्गीकरोति च वाचोभङ्ग्याऽधमर्णतामात्मन इति का कथान्येषां कवीनाम् ! केचिच्च मुक्तकण्ठमेवात्मनो रामायणाधमर्णताम् ऊरीकुर्वन्ति,

"यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं
गुणैरेतावद्भिर्भवति कथमन्यो जगति कः।
स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुर-
स्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः॥"

इति वदन् भट्टमुरारि, 'मधुमयभणितीनां मार्गदर्शी महर्षिः' इति संस्तुन्वन् धाराधीशश्च, न केवलं रामायणकथासङ्ग्रहीतृणां प्रायः सर्वेषामपि कवीनामादिकविप्रदर्शित एव पथि पान्थतां सूचयतः।

मन्ये यदि वाग्देव्यपरावतारो मम्मटभट्टो महाकाव्यमस्यादिकवेरुदाहरणतयाऽग्रहीष्यत्—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥

इति कारिकाव्याख्यानावसरे, तदायं नाभविष्यद्धावकादिद्वित्रि-कव्यन्वेषणश्रमभाजनम्, यतः पूर्वोक्तानां सर्वेषामपि प्रयोजनाना-मिदमेकमेव महाकाव्यमुपलब्धिस्थानं दृश्यते।

तदेवमिदम्प्रथमतया निसर्गतया कवितासुरधुन्या समुप-प्लावयन् जगतीं, संवर्धयन्ननेककविकुलकलमान् विकासयंश्च परस्सहस्राणि सहृदयमनःकैरवाणि जेजीयतेऽयमादिकविर्वाल्मी-किरजरामरेण यशःकायेन।

## ६. 'अहिंसा परमो धर्मः'

प्रकृतौ स्वाभाविकरूपेण सम्यगहिंसाऽसम्भवा। तथा हि महाभारते।

सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानि चित्।
पक्ष्मणोऽपि निपातेन तेषां स्यात् स्कन्ध-पर्ययः॥

निबन्धेऽस्मिन् तादृशी स्वाभाविकी हिंसा नाभिमता। अत्र तु स्वार्थवशात् या हिंसा क्रोधावेशादिना क्रियते, सैवाभिप्रेता।

"अहिंसा परमो धर्मो यतो धर्मस्ततो जयः" इति कस्यापि धर्मबुद्धेरुक्तिः। न प्रतिभाति मामयं सूक्तिकारो सर्वद्रष्टेति। इह जगति प्रतिदिनमप्रतिहतकुटिलगतीनां दयाविरहितानां मनुष्यनामधेयानामशान्तिकारिणीं कार्यावलिं दृष्ट्वा प्रतिहिंसाभावः समुत्पद्यते स्मर्यते च भगवतः कृष्णस्योक्तिरियम् —

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः,
अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत।
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्,
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥

तावत् पर्यालोचनीयोऽयं प्रश्नः तत्कथमहिंसा परमो धर्म इति।

धर्मस्तु यतोऽभ्युदयनिःश्रेयससिद्धिर्भवेत्। सर्वेषां मनुष्याणां लोके भौतिकसमृद्धीनाम्, यशसः, शान्तेश्च प्राप्तये स्वाभाविकाभिवाञ्छा दृश्यते। संसारो दुःखस्रोत इति विज्ञाय मोक्षाय प्रयतन्ते प्रज्ञाः। धर्मेणैव लौकिकविभूतयः पारलौकिक-

शान्तिश्च लभ्याः। धर्मस्तु सर्वैः पुरुषैः चरणीयो यतोऽनेन विना मनुष्यजीवनं वृथा भवति। किन्तु धर्मसंस्थापनार्थहिंसोपेक्षणीया नास्ति इति निश्चप्रचम्।

गीतायां भगवता कृष्णेन निर्दिष्टम्——

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत'
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।'
'परित्राणाय साधूनां विनाशाय च दुष्कृताम्,
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।'

आदर्शचरितानां साकारपरमेश्वर इति नामभृतामवताराणां धर्मसंस्थापनार्थाय प्रायः हिंसा दृश्यते। परशुरामेण पृथिवी क्षत्रियजाति-विहीना कृता। स तु परमक्रोधन आसीत्। रामेण अहिंसापूर्वकं सत्याग्रहमकृत्वा ताडकामारीचबालिरावणादयः स्वर्गं गमिताः। कृष्णो गीतायामर्जुनं युद्धस्य महत्त्वमुवाच। स तु सत्याग्रहशब्दस्याहिंसायाश्च नामापि न प्रतिपादितवान्। तेन कंसो हतः। महाभारतयुद्धस्य नेता स कृष्ण आसीत्। एवमस्माकमादर्शचरित्राणां नायकानामपि हिंसापूर्णव्यापारो वर्तते। अस्मान् ते हिंसयैव धर्मरक्षां कर्त्तुं कथं शिक्षयन्ति।

अहिंसया न कोऽपि प्राप्नोति लौकिकाभ्युदयम्। कदापि हिंसा न कुर्वन्तोऽपि वनचारिणो हरिणा मत्स्याश्च गृह्यन्ते खाद्यन्तेच। वियति स्वैरमुड्डीयमानाः पक्षिणो व्याधैर्हन्यन्ते। एवमहिंसाश्रितं राष्ट्रमपरैः परतन्त्रीक्रियते। तत्पश्चात् परतन्त्र-राष्ट्रस्य धनधान्येऽपि ते पारतन्त्र्यविधातारोऽपहरन्ति। एवं हिंसा-परायणं राष्ट्रं यावत् कलाकौशल-

विहीनम्, दैन्यग्रस्तम् पूर्वजसंस्थापितसभ्यतामरक्षच्छीघ्रमेव पतत्यवनति-कूपे तावद् हिंसा-पथेनापरं नित्यं वर्द्धते।

सर्वेषां कार्याणां प्रतिकार्याणि भवन्ति इति प्रकृतिनियमः। यथोपकारः प्रत्युपकारमर्हति, हिंसापि प्रतिहिंसामुदभावयत्येव। न बहवः 'क्राइस्ट'-'कबीर'-सदृशः क्षमाशीला अभवन्नस्मिञ्जगति येऽपराधकारिणं प्रति दयाभावमदर्शयन्। महात्मा गान्धीमहोदय उपदिशतिस्म यदपराधो घृणास्पदं न तु तस्य कर्त्ता। न हि प्रायशो दृश्यन्ते तेषामनुकरणकारिणः खलु। शत्रुं प्रति दया-भावदर्शनं संन्यासिनां महात्मनामेव कर्तव्यम्। साधारण-जनाः शठेन सह शाठ्यमेव समाचरेदिति नीतिं मानयन्ति।

स्वर्गलोके तु त एव शान्तिं प्राप्नुवन्ति, ये इह जगति महादानं बृहद्यज्ञं च कुर्वन्ति धर्मप्रचाराय शिवालयं धर्मशालां च निर्मान्ति। नहि अहिंसाश्रिता विजिता दीना हीनाः तानि धर्मकार्याणि सम्पादयितुं समर्थाः। धर्मसंस्थापनमपि क्वचिद् हिंसयैव सम्भ-वति। अहिंसा न हि लौकिकाभ्युदयाय अलम्। दुष्कृतां विना-शाय साधूनां परित्राणाय च हिंसाया महत्त्वम्। परन्तु अस्याः प्रयोगो यदि विमर्शपूर्वकं भवेत्तर्हि इयं फलप्रदायिनी भवति।

'अहिंसा परमो धर्मः' इति योगिनां कृते उपयोगिसिद्धान्तः। योगिनस्तु योगप्रभावेण हिंसामयमपि चतुर्दिशमहिंसं कुर्वन्ति। तादृशी तेषां सिद्धिः। गृहस्थानां कृते तु क्वचित् हिंसा, क्वचिदहिंसा यथायोग्यं भवतां नाम। अहिंसावृत्तिं समाश्रित्य लोकवृत्तिरपि क्वचिदसम्भवा जायेत, इति विचार्यापि न सर्वथा अहिंसा प्रतिष्ठापनीया। गान्धी महोदयोऽपि दुर्वृत्तान् प्रति हिंसाव्यापारमेव समर्थितवान्। स तु स्वातन्त्र्योदये कश्मीर-

देशस्य रक्षणाय वैदेशिकानाक्रमणकारिणः प्रतिहन्तुं भारतीय-सेनाप्रयाणं समादिष्टवान्।

यत्राहिंसया कार्यं सिध्येत्, न तत्र हिंसा प्रयोज्या। प्रायशोऽस्माकं कार्याणि हिंसां विनापि सिद्धानि स्युः, तथापि हिंसा तत्र प्रयोज्यते। 'हिंसाद्वारा आतङ्कस्य स्थितिं संसृज्य यदा कदा साकल्यमपि प्राप्यते' इति राष्ट्रियेतिहासे स्पष्टमेव दृश्यते। या शान्तिर्हिंसया लभ्यते, सा प्रायशः श्मशान-शान्तिरेव। वास्तविकी शांतिः केवलमहिंसया लभ्या, विशेषतः राष्ट्रियजीवने। हिंसायाः परमोपयोगो भवेत् क्षत्रियाणां वा सैनिकानां कृते वैदेशिकशत्रुभ्यः देशस्य संरक्षणाय। राष्ट्रस्यान्तरिक-व्यवस्थायां शान्तेः संस्थापनार्थाय हिंसानिरोध एव प्रतिपादनीयो विचारकैः—'अहिंसा परमो धर्मः' इति।

वास्तविकदृष्ट्या हिंसा तु प्राकृतिकी भवति, अहिंसा च मानव-संस्कृतेः सर्वोत्तमा निष्पत्तिरिति नात्र संशयम्। अहिंसाया उदात्ततमं रूपं विश्वात्मकं प्रेमैव भवति। सा सर्वैः सुसंस्कृतजनैः साधारणतः सदैव ग्राह्या। किन्तु यदा हिंसयैवात्मरक्षा, देशरक्षा, संस्कृति-रक्षा वा सम्भवेत्, तदा अहिंसा परमो धर्म इति सापवादं वाच्यम्।

## ७. "क्लेशः फलेन हि पुनर्नवतां विधत्ते"

कलिः शयानो भवति संजिहानस्तु द्वापरः।
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन्॥

लोकेऽस्मिन् सर्वे प्रयत्नवन्तः दृश्यन्ते। आत्मनः प्रयत्नेषु प्रकृत्या फलकांक्षिणो मनुष्या बहुविधैः क्लेशैः परितप्यन्ते। निःसंशयं क्लेशपूर्णमिदं नरस्य जीवनम्। एवम्भूतेऽपि न भवत्यस्माकं जीवनं रसविहीनम्। क्लेशेन हि फलप्राप्तिरिति मन्यमानः प्रवृद्धशक्त्या निजकार्यं लोकः सम्पादयति। फले प्राप्ते चात्यन्तं सुखमनुभवन् मानवो भवति नवस्फूर्तिपूर्णो नवीकृतश्च। इदमेव क्लेशस्य महत्त्वमस्माकं जीवने। प्रसङ्गेऽस्मिन् क्लेशस्तु श्रमाज्जायमान एवाभिप्रेतः।

न हि आनन्दप्रदं फलं क्लेशाद्विना प्राप्तम्। जीवनायात्यन्तमावश्यको वायुः जलं वानायासेनोपलब्धं न तथा सुखयति यथा आणकद्वयं कृतश्रमं भृतिरिति। कृत्स्नं दिवसं ग्रीष्मर्तौ खिन्नगात्रः कृषकः फलशयैव स्फूर्तिं धारयति क्लेशं च तृणवन्मन्यते। विद्यार्थिनो नक्तं दिवं सोद्यमं पठन्तः परीक्षोत्तीर्णाः सन्तः प्राणान तृणमिव मन्यमानाःकृतप्रयत्नाः लब्धविजयाः सैनिका इव प्रसन्ना भवन्ति। वैदिकाचार्याः सत्यमेव प्रोचुः—'नानाश्रान्ताय श्रीरस्ति'। अथ च—न ऋते श्रान्तस्य सख्याय देवाः। इति।

भवेद्यदि फलप्राप्तिः क्लेशं विना मनुष्यजीवनं निरुत्साहं म्लानं च जायते। सर्वे पुरुषा आनन्दविहीना न किञ्चिदपि कुर्वन्तो काकदन्तगणनयैव कालं यापयेयुः। अधुना स्वकर्मफलार्थमेके

इतस्ततो गच्छन्तो विभिन्नप्रकारैः स्वशक्तेरुपयोग कुर्वन्तश्च वर्द्धन्ते। एवं कार्यभारेणैकदा क्लेशमापन्नः सफलीभूतो मानवः क्लेशं क्लेशं न मन्यते। किन्तु नवीकरणाय साधनमेवामुमनुभवति। यदि क्लिष्टो न भवेत्पुरुषः, तर्हि कथं नवीकृतः स भवेत्।

क्लेशो नवता च परस्परं विरुद्धौ। एवं भूतेऽपि क्लेशो नवतायाः कारणं भवति, नवता च कञ्चन सक्लेशजीवनयापनाय प्रोत्साहयति। एवं जानन्तो वानप्रस्थाश्चिरं तपसाऽऽत्मविशुद्धिं कुर्वन्तोऽनेकान्क्लेशान्सहमाना अन्तकाले तपःफलं मुक्तिं निर्वाणं वा प्राप्नुवन्तो विपुलानन्दिता भवन्ति। ग्रीष्मर्तौ पृथ्वी अतिसंतप्ता सूर्यमरीचिभिः परीक्षोत्तीर्णेव प्रावृषि महावृष्ट्या हसन्तीव लक्ष्यते। अन्ये प्राणधारिणो वृक्षास्तृणानि च एवं सुखमनुभवन्त इव विशेषं रमणीया भवन्ति।

'क्लेशं विना मनुष्यजीवनं निरर्थकमपूर्णञ्च' इति वदन्ति महात्मनो गान्धी-टालस्टाय-प्रमुखा मनीषिणः। सुखदुःखे द्वेऽस्माकं जीवने समं गौरवपदमर्हतः। दुःखमनिच्छन् केवलं सुखमेवाभिवाञ्छन्नरः लभ्यांशादात्मभोगाय द्रव्याण्यपहरन् पापभाग् भवति निस्सन्देहम्। क्लेशे नवतां न पश्यन्तः पुरुषाः क्वचिच्चौराः काले काले मत्कुणा इव पराश्रया उद्योगहीनाः कदापि उन्नतिमुखा न भवन्ति। क्लेश उद्योगे भवति। अथ किम् 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इदमेव क्लेशस्य महत्त्वम्।

अस्मिञ्जगति ते पुरुषा अस्माकं श्रद्धास्पदं भवन्ति, ये नाम जीवनकाले विभिन्नप्रकारान् क्लेशाननुभवन्तः स्वीयेनादम्येनोत्साहेन तत्कालीनां लोकरीतिं शासनञ्चातिक्रम्य कारागारे भूमिगृहे वा निपतिताः तदज्जीवनमेव धन्यं मन्यमानाः प्राणोत्सर्गादिव

विमुक्ति प्राप्ताः क्वचित् सफलीभूता लोकहिताय सत्याय वा। अस्मिन् प्रसङ्गे सुकरातमहोदयः सविशेषमुल्लेखनीयः।

न हि क्लेशः फलेन सदा नवतां विधत्ते। क्लेश एव येषां जीवनाधारः तस्मिन् च ये सुखमनुभवन्ति ते क्लेशमेव बहुमन्यमानाः क्लेशसमाप्तौ प्राप्तं फलं मृत्युवदवगच्छन्ति। |गिवन महोदयः 'राइज एण्ड फाल आफ रोमन इम्पायर' नाम्नः ग्रन्थस्य लेखकः क्लेशबाहुल्येन तत् पुस्तकं लिखितवान्, तस्मिन् समाप्ते सशोकमना अभाषिष्ट 'कुत्रासौ ग्रन्थः? किं लिखिष्याम्यतः परम्' इति। तथापि अपवादरूपमेवेदं वृत्तं प्रतिभाति।

एतत्सर्वं परीक्ष्य मनुना सत्यमेवोद्घोषितम्-
आरभेतेव कर्माणि श्रान्तः श्रान्तः पुनः पुनः।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते॥

सम्राडशोकः श्रमस्य मनोरञ्जनात्मकं माहात्म्यं शिलालेखेनामरीकृतवान्। तद्यथा—

सर्वा च निरतिर्भवतु या श्रमरतिः।
नानेन क्लेशेन स्वार्थसाधनाय भवितव्यम्।

तथा हि

शुक्लीकरोति मलिनानि दिगन्तराणि
चन्द्रो न शुक्लयति चात्मगतं कलङ्कम्।
नित्यं परार्थं घटनाहितमानसानां
स्वार्थोद्यमो भवति नो महतां कदाचित्॥

भारतस्य राष्ट्रपिता गान्धिमहोदयः क्लेशमेव जीवनस्य साफल्यसोपानममन्यत। 'क्लेशः स्वप्रकृत्यैव फलांशः' इति तस्य मतम्। 'न कारणात् कार्यं भिन्नमिति' सिद्धान्तानुसारं तस्य मतं सुप्रतिष्ठितमेव। तथापि व्यावहारिकदृष्ट्या तत्रास्मद्विज्ञानां मतवैषम्येण भवितव्यमिति किमत्र चित्रम्।

## ८. 'न जातु कामः कामानामुपभोगेन शाम्यति'

श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः॥

सत्यमिदं यत् कदापि कश्चिदपि पुरुषः कामविहीनो न भूतो न भविष्यति वा। बृहदारण्यकोपनिषदि कामस्य परमतामुद्घोषयन् कश्चिदृषिः प्रोवाच—'काममय एवायं पुरुषः' इति नरनार्यः, पशवः पक्षिणश्च कामैःपरितप्यमानाः प्रयतन्ते तेषामुपभोगाय। मरीचिकेव काम्यपदार्था इह जगति परिणामेऽसुखकराः। ततो दुःखस्यानुभूतिर्भवति। एवं मनुष्या ज्ञानप्रदीप्तहृदयाः शीघ्रमेव परिजानन्ति कामानां वास्तविकप्रकृतिं यन्न खलु कामः कामानामुपभोगन शाम्यति। कामोपशान्तये कामाद्विराग एवैकमात्रमुपायः।

कामाः कामानामुपभोगन वर्द्धन्त इत्यर्थशास्त्रिणां मतिः। यथा कोऽपि बालो विश्वविद्यालये प्रवेशमिच्छति, प्रविष्टस्य तस्य पुस्तकेच्छोत्पद्यते। सोऽपरान् विद्यार्थिनो वैदशिकपरिधानसुसज्जितान् दृष्ट्वा तथैव वैषिकाडम्बरवान् भवितुमेव प्रयतते। पश्चात् स वैदेशिकानि अध्ययनसाधनानि प्राप्तुमिच्छति। शीघ्रमेव तस्य कामसरिन्महानदो भवति। प्रारम्भे यदि तस्य प्रवेशो नाभविष्यत्, स इत्थं काम-विकलोऽपि कदापि न भविष्यत्

वस्तुतो व्यष्टिशः कामोऽल्पायासेनैवोपशाम्यति। यथा भोजनमिच्छन् कश्चिदपि पुरुषस्तस्य प्राप्त्या सुखमनुभवति किन्तु पुनरपि स बुभुक्षितः सन् सकामो दृश्यते। समष्टिशः कामस्तु मृतमेव मनुष्यं परित्यजति।

काम एव कामस्य जनकः। प्रसङ्गेऽस्मिन् कस्यचित् साधोः कथा विश्रुता वर्तते। तेन क्वचिद गीतापुस्तकं प्राप्तम्। मूषकेभ्यस्तस्य रक्षणाय स मार्जारमपालयत्। मार्जारस्य दुग्धपानाय च स गामपालयत्। तस्या रक्षणार्थं स पत्नीं करोतिस्म। पश्चात् दाम्पत्यजीवनस्यानन्ता पुष्पशालिनी कामपरम्परा समुत्पन्ना। सत्यं हि प्रोक्तं कालिदासेन—

कामार्ता हि प्रकृतिकृपणाः।

प्रत्यक्षं दृष्टं यत् कामानामुपभोगेन पुरुषः कामविहीनो भवितुमसमर्थः। मरणकालेऽपि सम्राट् 'अळक्षेन्द्रः' जगत् विजेतुकामः सन्तुष्टो नाभवत्। महावैभवशाली रावणोऽपि मरणशय्योपरि स्वर्गसोपानस्थापनमतिर्निजेच्छां सार्गलां प्रतीत्योद्विग्नमानसो जातः।

तत्कथं कामानामुपशमनं भवेदति विमर्शार्हः प्रश्नः। आध्यात्मिकवृत्त्योत्पन्नकामानां दम एव कामोपशमस्य सर्वोत्तमोपायः। कृष्णो गीतायामुपदिशति—

यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते॥

कामोपशान्तये इन्द्रियनिग्रह आवश्यकः। यत इन्द्रियाण्येव मनसि कामान् सृजन्ति।

न हि कदापि सांसारिकवस्तुभिः यथार्थं शान्ति लभते नरः। पुरा गौतमबुद्धः सांसारिकविभूतिभिरात्मतृप्ति दुःखनिरोधञ्चामन्यसानो राज्यं स्त्रीं धनं पुत्रं सर्वं परित्यज्य निर्वाणप्राप्तये पर्यव्रजत्। न खलु इह जगति कामोपभोगेऽपि शान्तिरिति

तेन निर्दिष्टम्। कामानामुपभोगे दुःखमेव वर्तते। अतः शीघ्रं स्वावश्यकताः परिमिताः कुर्याम्। एवं सन्तोषलाभ एव भवेत्स्वजीवनलक्ष्यम्।

मधुशालावादिनस्तु अनुपममूर्खत्वेन मद्यजन्यान् भोगान् बहु मन्यन्ते। पुनः कौलास्तु वदन्ति अन्धत्वात्—

मन्तो ण तन्तो ण अ किंपि जाणं झाणं च ण किंपि गुरुप्पसादा।
मज्जं पिआमो मंहिलं रमामो मोक्खं च जामो कुलमग्गलग्गा॥

सर्वे ते एवंवादिनो नरकगामिन इति न संशयम्।

तर्हि किं कर्तव्यमिति प्रश्न उदेति। यदि कामानां पूर्तिं कश्चिन्न कुर्यात्, तर्हि सुनिश्चितमेव तस्यापायो जायेत। लोकेऽस्मिन् सुखार्थिनां कामपूर्तिरपेक्षितैव। तर्हि येन केन प्रकारेण कामाधिक्यप्रसारैः न वयं दुःखाभिभूताः स्याम, इति प्रयतनीयम्। मूलभूतकामा एव पूरणीयाः। न भोगविलासार्थं कामानां बहूनामुत्पत्तिर्जायेत यथा तथा नित्यमेव साधनीयमस्माभिः। तत्तु महात्मनां जीवनचरितमादर्शीकृत्यास्माभिः सम्पादनीयमिति व्रतम्। अयमेव बौद्धानां मध्यममार्गः परमसुखकरः।

गीतायां निष्कामजीवन-प्रवृत्तेर्महत्त्वं भृशं प्रतिपादितम्। निष्कामव्रतस्यैतादृशः पालको महात्माधुनिकयुगे गान्धिरासीत्। सतु सरलजीवनमेव स्वीकृतवान्। सरलजीवनेनैव देशोद्धारोद्यमेऽधिकतममध्यवसायं सम्पादयितुं स समर्थोऽभवत्। स आत्मार्थं किंचिन्नैच्छत्। अतएव परार्थं स्वजीवनस्य साफल्यं सोऽमन्यत। स भारतस्य श्रेष्ठतमो मानवो विष्णु-रूपोऽभिमतः। तस्य सर्वे कामा लोकहितायोदात्तीकृताः। अतो ब्रवीमि—

न वै कामानामतिरिक्तमस्ति।

## ९. "नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण"

अनित्यते जगन्निन्द्ये वन्दनीयासि सम्प्रति।
या करोषि प्रसङ्गेन दुःखानामप्यनित्यताम्॥

न हि दृश्यते किञ्चिदपि संसारे यत्सदैकस्मिन् भावे वर्तते। प्रथममुन्नतिः पश्चादवनतिश्च भवतः सर्वेषां भावानाम्। प्रतिदिनं सूर्य उदेति पूर्वस्यां दिशि शनैः शनैरुपरि गच्छन् मध्याह्नवेला-यामैश्वर्यस्य परां काष्ठामुपयाति। कञ्चित्कालं राजमानस्ततः पश्चात् पतति पश्चिमदिशि अस्तं गच्छति च। चन्द्रोऽनुदिनं वर्द्धमानः पूर्णत्वं प्राप्तो न सदा तादृशो वर्तते परं स क्षयं याति, अन्तकाले च लुप्तो भवति। पुष्पमप्येकदा विकसितं दिवसद्वय-मपि न शक्नोति आत्मस्वरूपं धारयितुम्। एवम्भूतेऽपि मति-हीनाः क्वचित् समृद्धिं प्राप्ता अपरान् घृणाभावेन पश्यन्त आत्मानं बहुमन्यमाना गर्वातिशयेन लोके उद्भावयन्ति स्वकर्मणा दुःखं विरोधञ्च।

अनेन प्राकृतिकक्रमेण भवत्यस्माकञ्जीवनं रञ्जितम्। नावनतिं विनोन्नतेर्महत्त्वं किञ्चिदपि। परस्परापेक्षया सुखस्य दुःखस्य वा भवत्यनुभवः।

सुखं हि दुःखान्यनुभूय शोभते
यथान्धकारादिव दीप दर्शनम्।
सुखात्तु यो याति दशां दरिद्रताम्
स्थितः शरीरेण मृतः स जीवति॥

कथं वाऽन्यथा सततं दुःखेन सन्तप्तः सुखस्य सविशेषं महत्त्वमभिजानाति । न कदापि कूपमण्डूकोऽनुभवति कूपस्य तमः, स्वदशायां ज्ञानविहीनत्वेनापि न तस्य शोको वर्द्धते । किन्तु काशीवासी यदि मरुस्थले कालगत्या प्रवसति जीवन्नपि स मरण-दुःखं प्राप्नोतीव। दरिद्रताऽपि न दर्शयति निजकठोरत्वं यदि कस्यापि पुरुषस्य भवति चिरसंगिनी । सदोन्नतिमालयाऽलङ्कृत-स्यापि पुरुषस्य भवति स्वस्माद् वैराग्यम्। एवं जीवनकाले सुखानुभवायापेक्षितमेव दुःखस्यास्तित्वम् ।

सर्वे प्राणिनो मनुष्याः पशवः पक्षिणो वा वृक्षाश्चापि क्वचिदुन्नतिं पश्चादवनतिमनुभवन्ति। मनुष्यास्तु शैशवे निश्चिन्ताः पित्रोः प्रेमास्पदम्, यौवने नानाभोगानास्वदमानाः सौन्दर्यातिशयेन परिमण्डिता वृद्धत्वमुपगता नाशयन्ति सर्वं निजरमणीयत्वं, भवन्ति च जर्जरितशरीरा भग्नदन्ताः पलितकेशाश्च। ईदृशी गतिर्हि सर्वेषां जन्तूनां वनस्पती-नाञ्च भवति। उन्नत्यवनतिक्रमेण जीवनं यापयन्ति सर्वे । एक-दाऽत्यन्तविशालं रोमसाम्राज्यं, नैपोलियनस्य महाशक्तिः, गौतमबुद्धस्य धर्मश्चाभ्युन्नतेश्चरमसीमां प्राप्तानि, तथापि अधुनेतिहासपृष्ठे एव व्याख्यातानि किंवदन्त्या वा स्मृतान्येव। न हि कस्यापि दृश्यते शाश्वती समाना गतिः।

यदि न भवेत् प्रकृतेरियं गतिः सुखदुःखविषये कथमन्यथा कश्चिद् ज्ञास्यति कस्याप्यपरस्य सुखं दुःखं वा। कमपि पुरुषं आपद्भिर्हन्यमानं दृष्ट्वात्मनो दुर्दिनमनुस्मृत्य भवति पुरुषो दयार्द्रमनाः साहाय्यञ्च तस्य करोति। दुःखितोऽपि पुरुषः सधैर्यः सन् सततं यतमानो भवति सुखप्राप्तये । अनेनोन्नत्यवनतिक्रमेण

सर्वेषामुत्थानपतनैः प्राप्तसुखदुःखानां समत्वं सम्भवति। न कोऽपि सर्वदोन्नतः सुखी, न तु अवनतो दुःखी वा स्यात्।

न हि स्थूलदृष्ट्या सर्वत्रोन्नत्यवनत्योः क्रमो दृश्यते। बहवः पुरुषा दुःखे जाता दुःखे जीवन्तो मृताश्च। कदापि न दृश्यते तेषां जीवनकाले सुखोपलब्धिः। बाल्ये यौवने वार्धक्ये वा न भवति तेषां कदापि पूर्णभोजनवस्त्रादीनां प्राप्तिः। कदाचित्प्रकृति-नियमस्यापवादा एव ते। प्राप्तनिर्वाणाः, सिद्धा वा न पतन्ति स्वोच्चस्थानात्। ते सकृल्लभन्ते स्वोन्नतिं पश्चात् न कदापि पतन्ति। यथा रथस्तु चक्रनेम्या उन्नत्यवनतिक्रमेणाभीष्टं स्थानं गच्छति पश्चाच्चक्रनेमिः नावनत्युन्नतिक्रममुपयाति, तथैव पुरुष इह जगति क्वचिदुन्नतः क्वचिदवनतः प्रयतते सर्वदा। किन्तु सकृदपि आत्यन्तिकमानन्दं प्राप्य न कदापि दुःखमनुभवति न हि पतति च कदापि तस्मात्स्थानात्।

तथापि महतोऽधिकृत्य तु क्षेमेन्द्रस्योक्तिरियं वरेण्या—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता॥

उन्नत्यवनत्योः क्रमोऽयं कालसञ्चारितो भवति। अतः दुःखे सुखे वात्मनः कारणत्वं नानुचिन्तनीयम्। भारविणा सुष्ठु प्रोक्तम्—

लंघ्यते न खलु कालनियोगः।

तदेव समर्थितं कल्हणेन—

अम्भोऽपि प्रवहत्स्वभावमशनैराश्यानमश्नायते
ग्रावाम्भः स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुषः।
कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेऽद्भुते
कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः।

## १०. पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः

प्राज्ञस्य मूर्खस्य च कार्ययोगे ।
समत्वमभ्येति तनुर्न बुद्धिः ॥

निजकर्तव्यं प्रजानन्नेव विद्वान् भवति पुरुषः । स हि जीवनपर्यन्तमात्मकल्याणार्थं यतमानो निर्वैरः, परोपकारशीलः, स्वार्थरहितश्चाशेषप्राणिहितं विदधत् लोकसंग्रहं चिकीर्षति। नास्ति स सांसारिकविषयैकमतिः साधारणो जनः । स विचारयति-

उपकाराय या पुंसां न परस्य न चात्मनः ।
पत्रसंचय-सम्भारैः किं तया भारविद्यया ॥

कदापि न विद्वान् कस्यापि हानिमिच्छति । मूर्खस्तु स एव यः कमपि शत्रुं मन्यते। कस्यापि पुरुषस्यानुचितं व्यवहारं दृष्ट्वापि स विद्वान् विक्षुब्धो भवति न क्रुद्धो भवति। तथा हि—

मूढानामेव भवति क्रोधो ज्ञानवतां कुतः।

विक्षोभावेशे क्षणमपरस्याज्ञानमगणयित्वा तं निन्दति तदपि तस्य कल्याणाय। यथा वाल्मीकिर्निषादस्य दुष्टं कर्म दृष्ट्वाऽवोचत्—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

आत्मानमेव सर्वभूतेषु पश्यन् विद्वान् परार्थे स्वार्थं मन्यमानः परित्यक्तसुपथान् मार्गं निर्दिशति। विद्वान् सर्वं खल्विदं ब्रह्मेत्यवधार्य कस्मैचित् न विद्वेष्टि।

किंकरणीयमिहजगतीति मूर्खा न जानन्ति। कथमात्मोन्नतिः कर्तव्येति न ज्ञात्वाऽपरस्योपकारं कर्त्तुं कदापि न योग्याः। स्वयं ज्ञानलवदुर्विदग्धाः कथन्ते तमसावृतानां समक्षं प्रकाशं करिन्ति। उपकारमनसोऽपि ते निजमत्योपकारमपि विदधतो हानिमेव कुर्वन्ति। कोऽपि बालको दयासम्पन्नः कस्मिंश्चित् स्वल्पजले जलाशये इतस्ततः तरतो मत्स्यान् जले दुःखितान् मत्वा, तान् गृहीत्वा जलाद्बहिष्कृत्य धर्मे धरतिस्म। कोऽपि स्वामिनो नासिकायां वारंवारमुपविशन्तीं मक्षिकां हन्तुं शिलाशकलप्रहारेण तस्याङ्गभङ्गमकरोत्। 'मूर्खा अज्ञानवशेन कस्यापि हानिं कुर्वन्त उपकारं कर्त्तुमसमर्थाः' इति स्पष्टमेव। प्रागेव प्रोक्तं यद् मूढानामेव भवति क्रोधः। तेन क्रोधेनाकार्यं क्रियते। तिद समुद्घाटितं केनापि कविना—

अकार्यं क्रियते मूढैः प्रायः क्रोधसमीरितैः।

अन्यत्रापि यत् प्रोक्तम्—

गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत्।
पण्डितस्य गुणाः सर्वे मूर्खे दोषाश्च केवलाः॥

इति सत्यमेव। महाभारतानुसारं बहवो विद्वांसोऽपि दुर्योधनं समाश्रिता एवान्यायपरायणा बभूवुः। तत्र कारणं तु नेत्रान्धस्य धृतराष्ट्रस्य ज्ञानान्धः पुत्रो दुर्योधनस्तस्य दुर्नीतिश्च। दुर्नीतिपथानुसारिणो राज्ञो मित्रं कर्णो विद्वानपि महायुद्धस्य प्रवर्तकोऽभवत्। द्रौपदी-चीरहरणे, अभिमन्यु-मारणे वा तस्य मतिर न्याय-परायणा सती दुर्योधनं मूढतरं कृतवती। तद्यथा प्रोक्तम्—

मोहजालस्य यो योनिर्मूढैरिह समागमः।
अहन्यहनि धर्मस्य योनिः साधु-समागमः॥

आत्मकल्याणेच्छुः मूर्खान् प्रत्युदासीनो भवतु। तेषां मैत्री न ह्यभ्युदयाय। ते क्षणं रुष्टाः क्षणं तुष्टाश्च हानिमेव कुर्वन्ति सर्वदा। धीरा विद्वांसः कदापि चिरं शत्रुत्वं नापद्यन्ते। तेषां क्रोधोऽपि भवत्यस्माकं विशुद्धये।

प्रसङ्गेऽस्मिन् सुसंस्कृता जना एव पण्डिता अभिमताः, न तु संस्कृति-विहीनाः केवलमर्जितविद्याश्च जनाः। दुर्वृत्ता विद्वांसोऽपि हानिप्रदा इति न विस्मरणीयम्। अस्माकं समाजेऽद्य बहवो भ्रष्टाचारा विद्वांसः सन्ति, ये राष्ट्रस्याभ्युदययोजनासु सवेतनं नियुक्ता अपि केवलं स्ववेतनेनापरितुष्टा उत्कोचधनं स्वीकुर्वन्तो कार्याणि न निपुणं सम्पादयन्ति। फलतः तेषां कृतमपि दुष्कृतं भवति। भारतराष्ट्रस्याभ्युदये इयं स्थितिः महतीं बाधां समुपस्थापयति। ज्ञानलवासंस्पृष्टा श्रमिकाः कृषकादयो राष्ट्रसंवर्धने योग्यतानुरूपं सचेष्टा इति कस्यापि नाविदितम्।

विद्वान् शत्रुभूतोऽपि स्वामित्रस्य विपत्ति-काले स्वाभाविकमौदार्यं प्रदर्शयत्येव। अमित्रस्यापि विपन्नावस्थां परिज्ञाय स शात्रवं विस्मरत्येव। शात्रवं तु तस्य क्षणिकं किन्तु शाश्वतमेव तस्य परोपकारबुद्धिः। तदनुसृत्य कालिदासेन निर्दिष्टम्—

आपन्नार्ति प्रशमनफलाः सम्पदो ह्युत्तमानाम्।

व्यासेनापि प्ररोचितम्—

मैत्री समस्तभूतेषु ब्राह्मणस्योत्तमं धनम्।

साधारणजनानां कृते तु सत्यं भवतु बाणस्य वाणीयम्—

प्राणपरित्यागेनापि रक्षणीयाः सुहृदसवः।

विदुषां विषये तु सूक्तमिदं प्रतिफलतु—

'प्राणपरित्यागेनापि रक्षणीयाः शत्रुप्राणाः' इति। ●

## ११. सहसा विदधीत न क्रियाम्

न श्वः श्वमुपासीत, को हि मनुष्यस्य श्वो वेद।

अलौकिकी मतिर्हि कर्मद्वेषिणामलसानाम्। कथयन्ति ते 'रोमस्यैकस्मिन्नेव दिने निर्माणं न भूतमिति।' एवं यावत् कच्छपगत्याग्रे सरन्त ईदृशः पुरुषा अल्पजीवनकाले स्तोकमुत्कर्षं लब्ध्वा तारका इव सन्ति क्षिप्रकारिणस्तावत् तडिदिवाकाशमण्डलं सकृत् प्रकाश्य कवीनां हृदयहारिणो जायन्ते। तादृशो महापुरुषाः स्मरणीयाः सन्ति—अभिमन्यु-शङ्कराचार्य-विवेकानन्दादयः प्रत्युत्पन्नधियो यत्र निस्संशयं शीघ्रमेव साफल्यं लभन्ते, अलसाः जीवनपर्यन्तं विमृशन्त एव न किञ्चिदपि कर्त्तुं क्षमाः। समासन्नमरणकालेन रावणेन लक्ष्मण उपदिष्टः "मा किञ्चिदपि अनागतकाले कर्त्तुं कदापि परित्यज। शीघ्रमेव कुरु करणीयम्। अन्यथा मम स्वर्गसोपानमिव मनोरथानां गतिः कार्ये न परिणंस्यति" इति। सत्यमेव तस्य वचनम्।

सहसैव कार्यं कुर्वन्तो जना महनीया भवन्ति। दीर्घसूत्रिणस्तु स्ववसराननुपयुज्य यावत् करणीयं न वा करणीयमिति विमृशन्ति तावदपरे साफल्यं प्राप्य सोत्कर्षा भवन्ति। पदे पदे कण्टकविहीनत्वं समीहमानाः यात्रिकाः आदिवसं क्रोशमपि गन्तुमसमर्थाः। तेषां हि विचित्रा गतिः, ये कण्टकानामस्तित्वमपि विस्मृत्य इतस्ततः परिधावन्तस्स्वोत्साहबलेन सर्वत्र प्रकाशं कुर्वन्तो विद्युत्कम्पा इव जगदलङ्कुर्वन्ति।

युद्धभूमौ सहसाक्रमणकारिणस्सफलतां लभन्ते। हिटलरस्य विचित्रगतिविधिनानेके देशाः सहसैव विजिताः। स शत्रून् प्रति आक्रमणस्य सूचनामपि न प्रेषयामास। अथ किम्, यदि प्रागेव ते आगमिष्यन्तीं विपत्तिमज्ञास्यन् तर्हि सन्नद्धा एव युद्धार्थमधिकतरं समर्था अभविष्यन्।

युद्ध-स्थले तु सहसाकरणमेव साहसस्यापरं नाम। तथा हि—

'साहसे श्रीः प्रतिवसति' इति

अथवा—

'प्राप्यते किं यशः शुभ्रमनङ्गीकृत्य साहसम्'

इति लोकैश्वर्यकामिनां कृते परमं सत्यम्। तदेव समर्थितं कल्हणेन—

यथा चित्तं तथास्य स्यात् कायश्चेत् साहसक्षमः।
तदात्मनिरपेक्षस्य किं न सिद्ध्येन्मनीषितम्॥

केवलं द्वौ शीघ्रत्वं न कुरुतः, प्रथमाः कर्मद्वेषिणः ये 'सहसा विदधीत न क्रियामिति' वदन्तः प्रातःकाले सूर्योदयात्पूर्वं शय्यां न त्यजन्ति। पश्चात् किमपि करणीयं श्रुत्वा ते ज्योतिर्विद आकार्य तस्य कार्यस्य प्रारम्भाय शुभतिथिं पृच्छन्ति। अनेन प्रकारेण वहुकालं ते सज्जीभवने क्षपयन्ति। द्वितीयास्तु 'सर्वङ्खलु ईश्वरः करोति' इति वादिनः 'भाग्यं फलति सर्वत्र न विद्या न च पौरुषमिति' कथयन्तः सदा भाग्यस्यापेक्षां कुर्वन्तः प्रयत्नः करणीय इति न विमृशन्त्येव। पुरुषस्तु कर्मणि सदैवोद्यतस्सन्नेव सिद्धिं प्राप्नोति। पुरा वहवो राजानः शुभतिथिं प्रतीक्षमाणाः शत्रोर्विरोधमपि न कुर्वन्तः पराजिता बभूवुः।

प्रत्युत्पन्नधियो बहवः सङ्कीर्णपथे शत्रून् निगृह्यैकैकशः तेषां विनाशं कुर्वन्ति।

नास्ति कश्चिदपि बुद्धेरुपयोगो लाभो वा यदि सहसैव किं कर्तव्यमिति झटिति न ज्ञातं भवेत्। यथार्थदर्शिनस्तु यथाकालं स्वकर्तव्यं सम्पादयन्ति। आगतमनागतं वा विपत्तिसागरमित्थं धैर्येण ते संतरन्ति।

परीक्षाकाले 'सहसा विदधीत न क्रियाम्' इति वादिनः प्रायोऽनुत्तीर्णा भवन्ति तृतीयश्रेण्यां वा सफलतां लभन्ते। निर्दिष्ट-काले सकलकार्यस्य परिसमाप्ति सफलतामानयति। जीवनका-लोऽपि नास्ति दीर्घः। यत्किञ्चिदपि करणीयं वर्तते, शीघ्रमेव तत्सम्पादयामः। यदि न भवेद्मुक्तिः, तर्हि पुनर्जन्मन्येवावसरस्य प्राप्तिः स्यात्। प्रत्येकक्षणस्य महती उपयोगिता वर्तते। यदि सहसा कार्यं कुर्वन् साफल्यं न लभत, असफलतैव ननु सफलतायाः सोपानम्भवति। तदेव समर्थयन् कश्चित् सुकविः प्राह—

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्॥

'लघु जीवनम्, विपुलं करणीयम्' इति मनसि निर्धार्य मा कश्चिद् विचारणा-प्रपञ्च-गर्ते चिरं शरणं गृहणातु। 'महाजनो येन गतः स पन्था' इति सम्प्रधार्याचिरमेव महाजनानां चरिता-दर्शेषु स्वकीयकर्तव्यस्य पद्धतिं विज्ञाय क्षिप्रमेव यत्करणीयं तत्सम्पाद्यम्।

तथापि हिंसादिकर्मणामपि क्वचित् कर्तव्यता ज्ञायेत चेत्तर्हि 'सहसा विदधीत न क्रियाम्' इति सूक्तिमवधार्य चिरकारी

भवेत शीघ्रकारिणां मनसि कुकर्मापि सुकर्मेति प्रतिभाति क्वचिदनवधानात्। स्वाभाविकपापवृत्तय एव तत्र कारणम्। अविमृश्यकारी च न भवेदिति सूक्तेः परमुद्देश्यम्। सहसा कर्माचरन्तः प्रायशो जना विमर्शहीना भवन्ति। तेषां प्राक् प्रबोधनार्थं प्रोक्तमेव—

'सहसा विदधीत न क्रियाम्' इति।



## १२. चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः

श्रीमद्भगवद्गीतायां कृष्णेन सन्दिष्टस्य वाक्यस्यायमेवाभिप्रायो वर्तते यत् वर्णव्यवस्था स्वाभाविकी अस्ति, अथ चानया व्यवस्थया लोककल्याणमेव भवितुमर्हति। वर्ण-व्यवस्था विविधरूपा सती प्रायशः सर्वेषु देशेषु सर्वेषु युगेषु च वर्तते एव। प्रथमं तावत् नृतत्वविज्ञानाधारेण स्पष्टं प्रतिभाति यत् पुरा विश्वस्य विविधभागेषु विविधवर्गीया मानवा बभूवुः, येषां पारस्परिकान्तरं नेत्रगोचरमासीदस्ति वा। अधुनापि 'अफ्रीकावासी' कृष्णो नीग्रो इति ख्यातः आंगलदेशजासिश्वेतपुरुषाद् भिन्न एव लक्ष्यते। अपरं च गुण-योग्यता-विभागानुसारमन्तरं स्पष्टम्। तदधुनापि आचार्योपाधिधारी विद्वान् शास्त्रिणो विदुषः सविशेषो मन्यते। व्यवसायानुरूपं वैभिन्न्यं संस्कृतौ ईषद्विकसितायां प्रारभत, वर्धते च संस्कृति-प्रगमनानुसारं नित्यमेव।

इह जगति सर्वेषां नराणां काचिज्जातिः केचिद्गुणाश्च भवन्ति। प्रत्येकजातर्गुणाः कर्माणि च पृथक् सन्ति तथापि नास्ति नासीत् कदापि वा कस्यापि पुरुषस्यापरजातेः गुणकर्मग्रहणे प्रतिषेधः। प्रकृत्या कोऽपि बालकः स्वपितुः कर्मानुकरोति परकर्मणि तादृक्षो न भवति, यावत् पैतृककर्मणि। तथाप्यनेकपुरुषाः सततप्रयत्नेनापि स्वजातेः कर्मणि प्रगमनमपश्यन्तोऽपरजातेः कर्माणि स्वीकुर्वन्ति।

निस्सन्देहं पुरुषाः शान्तिं पवित्रतामहिंसां यावज्जीवं विदधतो ब्राह्मणा इति, अस्त्रशस्त्रैः प्रजा रक्षन्तः क्षत्रिया इति, कृषिकर्मणा

लोकरक्षां कुर्वन्तो वैश्या इति सेवया शूद्रा इति नामार्हाः। किन्तु स्वकर्म-बुद्धिर्न भवतु कस्यामपि जातौ जन्मनैव। न हि स्रष्टा पुरुषं निश्चितकर्मकरणाय निर्दिशति। कृष्णो गीतायां स्पष्टीकरोति यत् निजगुणकर्मभिरेव चतुर्णां वर्णानां स्थितिः। ब्राह्मण-कुल जन्म लब्ध्वा शूद्रकर्म कुर्वन् कोऽपि ब्राह्मणनाम्नोऽधिकारी नास्ति। शूद्रकुलोत्पन्नोऽपि पुरुषो ब्राह्मणकर्मणा ब्रह्मत्वमर्हति। सत्यमिदं यत् किमपि कर्म स्वभावेनोच्चं नीचं वा नास्ति। निष्कामकर्मणा सर्वे समानगतिं प्राप्नुवन्ति।

न हि स्वजात्या कस्यापि गर्व उचितः। गुणाः पूजास्थानं सन्ति। रामः कृष्णश्च क्षत्रियौ सन्तावपि लोकहितं कृतवन्तौ न केवलं भारतदेशे किन्तु सर्वत्रैव श्रद्धास्पदं स्तः। ब्राह्मणवंशोद्भवो रावणः पतितकर्मणा राक्षसोऽभूत्।

जन्मना जातिनिर्धारणं केवलं परम्परावादिभ्य एव रोचते बहवस्तत्राभवन् धर्मशास्त्रकारा येषां मते जन्मना जातिस्तु तावदेव वृथा यावत्कर्मणाऽपि तस्या अभिव्यक्तिर्न भवेत्। उच्चवर्णेषु न सर्वेषां पुरुषाणां वर्णो जन्मना कर्मणा चोभयविधिना साधारण्येन प्रतिष्ठापनीयोऽभवत्। यदा जन्मनाऽन्या जातिर्भवति कर्मणा च तस्या व्यतिरिक्ता जातिः प्रतिभाति तदा वर्णव्यवस्था मूलतो निरस्ता भवति।

सर्वप्रथमः प्रसिद्धो महापुरुषो गौतम एव जन्मना जातेर्विरोधं कृतवान्। तद्यथा—

न जच्चा वसलो होदि न जच्चा होदि ब्राह्मणो।
कम्मुना वसलो होदि कम्मुना होदि ब्राह्मणो॥

गौतमस्य संघे नासीत् जन्मना जातेरस्तित्वमपि। संघे

जन्मना केवलं मानवजातिरासीत्। नापितोऽपि संघे प्रथमं प्रव्रजितः पश्चात्प्रव्रजितानां क्षत्रियाणामपि वन्द्योऽभवत्। शाक्याः संघे समाविष्टाः सन्तः शाक्यत्वविहीना बभूवुः।

अपरेऽपि भारतीयसंस्कृतरुन्नायका अनुयायिनां जातिविहीनत्वमेव व्यवस्थितवन्तः। शङ्कराचार्य-रामानुज-रामानन्द-चैतन्यादयो जन्मना जातेर्निःसारत्वं प्रदर्शितवन्तः। तेषामनुयायिनः सर्वेभ्यो वर्णेभ्यः समागता दीक्षिताः सन्तः समाना बभूवुः। सर्ववर्णानां मोक्षस्य निर्वाणस्य वा द्वारमपावृतमासीत्।

यावत्कालं वर्णव्यवस्थाया मूलाधारः कर्माभवत्, तावन्मात्रं सा व्यवस्थावश्यमेव लाभप्रदाऽऽसीत्। वैदिककाले जन्मना शूद्रोऽपि ब्राह्मणोचितानि कर्माणि कुर्वन् ब्राह्मण एवाभिमतः। वैदिककालस्य पश्चात् जन्मना जातिः प्रायशो निर्धारिता वर्तते। अपवादरूपेणैवोच्चतरकर्मभिरुच्चतरजातिरिह जन्मनि प्राप्तव्या सम्मता।

जन्मना जातौ प्रसिद्धायामुच्चतरकर्मणि साधारणजनानां प्रवृत्तिः कथं भवेत्, यदि 'दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः' एव लोकधारणा स्यात्। इयं स्थितिः ब्राह्मणानां पतनायासीत्, वैश्यशूद्रयोश्चाभ्युत्थान दिशायां धारणेयं बन्धरूपासीत्। हीनतरवर्णानामभ्युत्थानाय किंचिदपि प्रोत्साहनं नासीत्।

विविधवर्णेषु विभिन्नजातिषु च पारस्परिकसाम्यभावस्याभावोऽपि वर्णव्यवस्थायाः सदोषत्वं निर्दिशति। शूद्रे घृणा कथं तस्य महर्षेर्हृदये व्याप्नुयात्, येन दृष्टम्—तदेतद् ब्रह्म ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः। राजन्यैकमुखत्वमपि जातिव्यवस्थया किञ्चिद्विनष्टमेव

दृश्यते । व्यावसायिकवैशिष्ट्यं तु वर्णव्यवस्थायाः शाश्वतगुणः प्रतिभाति इति न विस्मरणीयम् । न कापि व्यवस्था सर्वथा सगुणा भवति। जाति व्यवस्थायां भवन्तु कतिपयदोषा नाम, तथापि प्राचीनकाले व्यवस्थयानया भारतस्य भृशमुपकृतम्। देशस्य सांस्कृतिकनिर्माणार्थं जातिव्यवस्थाया उपयोगोऽभवत् ।

## १३. "स्वधर्मे निधनं श्रेयः परधर्मो भयावहः"

अस्मिन् भारतदेशे तु निवासिनामनेका जातयो वर्तन्ते। प्राधान्येन 'ब्राह्मणक्षत्रियवैश्यशूद्रा' इति वर्णविभागो विराजते। एषु च एकैकस्य बहुला विभागाः वर्तन्ते। तथाहि वैश्येषु—स्वर्णकाराः, वणिजः, लौहकाराः, कुम्भकाराश्च सर्वे गण्यन्ते। सर्वासां जातीनां प्रत्येकं धर्मः कर्म वा लोकरीत्या स्मृतिभिश्च निश्चीयते। प्रश्नोऽयं समुपस्थितः कदापि स्वधर्मस्त्याज्यो न वेति। भगवान् कृष्णो गीतायामर्जुनमुपदिशति 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति। स्वधर्मे यदि मृत्युरपि भवेत्, न स त्याज्यो यतः परधर्मः पतनस्य कारणम्।

स्वधर्मेण इह लोके उन्नतिः परलोके सद्गतिश्च सम्भाव्येते। विभिन्नजातीनां धर्मा न समाना इति निश्चितम्, किन्तु चाण्डालस्य चाण्डालत्वेन, शूद्रस्य शूद्रत्वेन, ब्राह्मणस्य ब्राह्मणत्वेन च समाना गतिर्भवति। पुरा धर्मव्याध इति ख्यातः कश्चिच्चाण्डालो मांसं विक्रीणन् सुगतिं प्राप्तवान्। स्वधर्मे सर्वे कुशला भवन्ति पैत्रिकसंसर्गात् संस्काराच्च। न हि साधारणतः शूद्रो ब्राह्मण कर्मणि तादृग् दक्षो भवितुं समर्थो यादृक् शूद्रकर्मणि, न वा ब्राह्मणः क्षत्रियसदृशोऽस्त्रशस्त्र-विशारदो भवति। कस्यापि स्वधर्मत्यागस्तस्य पौरुषहीनत्वमेव परिचाययति। यदि प्राणोत्सर्ग एव धर्मः क्षत्रियस्य, किं रोचते तस्य क्षात्रधर्मात् शूद्रत्वे परिवर्त्तनमथवा ब्राह्मणस्य ब्रह्मपरस्य तपसो वियुज्य सरलवैश्य-कर्मणोऽङ्गीकारः। वर्तमानः समाज उदाहरणं भवतु। परधर्म-

ग्रहणेन सर्वे सर्वतः पतिताः। ब्राह्मणाः क्षत्रियवैश्यशूद्राणां कर्म, शूद्राः ब्राह्मणक्षत्रियवैश्यानां कर्म कुर्वन्तः स्वधर्मं परित्यज्य न हि सन्त्युन्नतिमुखाः। विपरीतमस्य पुरा निजधर्मं परिपालयन्तः सुखशान्तिसमृद्धिशालिनः सर्वे पारस्परिकप्रेमसद्भावयुक्ता अभूवन्। अथ किं 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति प्रोक्तं भगवता। पापं कुर्वन्नपि—

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥

एवं ज्ञात्वा विधि-विहिते धर्मे आत्माभ्युन्नतिमार्गं मान्यमानो मा कोऽपि स्वधर्मात् विमुखो भवतु।

'सांसारिक सुखानि न सन्ति आत्मविमुक्तये' इत्याधिभौतिकमनसा न प्रतीयते। यदि स्वधर्मे विघ्नाः सन्ति, ते उदय-पथे सोपानानीव प्रवर्तन्ते। परधर्मे सुखानि न प्रतिभान्तु नाम, परन्तु मृगतृष्णेव तेषां प्रकृतिः। यदि स्वधर्मे निधनं भवेत्, मा भयं कार्षीः। अथ किम्—

न जायते म्रियते वा कदाचिन्-
नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो-
हन्यते हन्यमाने शरीरे॥

स्वधर्मे निधनेनावश्यं स्वर्गप्राप्तिर्भवति।

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति नियमो नास्माकं समयोचित इति वदन्ति राजनीतिज्ञा अर्थशास्त्रपण्डिताश्च। न केवलं ब्राह्मणा वेदशास्त्रपारङ्गता भवितुं समर्थाः, अपि तु वैश्य-

शूद्रचाण्डालाश्च ब्राह्मणा इवाध्ययनेन तादृशाः पण्डिता भवन्ति। बहवो ब्राह्मणाः शूद्रकर्मणि प्रवृत्ता अग्रसराः सम्भूताः। मिथ्याजात्यभिमानेन न सिद्ध्यति किञ्चिदपि। एवं वदति बुद्धः—

न जच्चा वसलो होदि न जच्चा होदि ब्राह्मणो।
कम्मुना वसलो होदि कम्मुना होदि ब्राह्मणो॥

स्वधर्मं आत्मप्रवृत्त्या निर्धारणीयो येन परधर्मस्य प्रश्नो नोदियादेव। तथा हि महात्मा गान्धिमहोदयो वैश्यकुले जातोऽपि ब्राह्मणवृत्तिक आसीत्। स हि स्वयमेव ऋषिकल्पं जीवनमनयदन्यांश्च संपृक्तान् जनान् सुसंस्कृतजीवनं यापयितुं मार्गमदर्शयत्। न केवलं यज्ञादिकं ब्राह्मणकर्म। अथ च सेवाकर्म लोकसंग्रहदृष्ट्या, ब्राह्मणोचितमेवेति ऋषिभिरादर्शीकृतम्। धर्मस्य सूक्ष्मा गतिः। सर्वे ते धर्माः कर्माणि वा यदि लोकाभ्युदयार्थं भवन्ति न तेषां करणे जातिच्युतेः सम्भावना अथवा भयस्य कारणम्। इयमेव भारतस्य शाश्वती सांस्कृतिकी विचारधारा।

कस्यचित् पुरुषस्य स्वधर्मस्य निर्धारणं क्वचित् स्वभावानुसारं भवति, अन्यत्र च स्वामिनियोगेन संस्कारेण वा जायते। यो धर्म इत्थं निष्पाद्यते, तेन कस्यांश्चिद् विशिष्टवृत्तौ कौशलविशेषः परिचीयते। स कौशलविशेष एव धर्मस्तस्य लक्षको वर्तते। अनेन कौशलविशेषेण पुरुषस्य कार्य-सम्पादन-योग्यताया विशेषो लक्ष्यते। स्वाभावानुसारं यत्किञ्चित् पुरुष आचरति तत् सुकृतं भवति। पुरुषस्याभ्युदयाय वा सामाजिककल्याणाय

वा तस्योपयोगिता स्पष्टमेव वर्तते। नान्यं कञ्चिद् धर्ममनुचरन् पुरुषः तावतीं सिद्धिं लभेत।

स्वधर्मेण सह पुरुषस्य सम्बन्धोऽकृत्रिम एव पवित्रः शाश्वतो भवति। न तस्य विच्छेदः पुरुषस्य हिताय भवेत्, समाजे च तादृशस्य धर्मस्यानियतत्वादुच्छृंखलता जायेत। अतः प्रोक्तम्—

स्वधर्मे निधनं श्रेयः।



## १४. भारतीयसंस्कृतेर्वैशिष्ट्यानि

भारतीयसंस्कृतेः प्रथमं वैशिष्ट्यं तस्या देवपरायणता विद्यते। तथाहि भारतीयप्रगमनस्य प्रायः सर्वाणि क्षेत्राणि देव-सम्बद्धानि सन्ति। एकस्मात् पुरुषाद् ब्रह्मणो वा जगतः सृष्टिं मत्वा दार्शनिकपद्धत्या तद् ब्रह्माभिज्ञाय मानवजीवनस्य सर्वोच्चमुद्देश्यं मुक्तिरिति सम्भावितम्। वैदिकदर्शनानुसारं तदेकमेव ब्रह्म जगत्यस्मिन्नग्नीन्द्र-विष्णु-वरुण-रुद्रादिरूपेण सर्वत्र व्याप्तम्। एतेषां देवानां यज्ञादिभिः प्रसादनेन स्वर्गप्राप्तिरिति भारतीय-धर्मस्य प्रमुखा प्रवृत्तिः।

भारतीयाः प्रवृत्तयः सामान्यतो देवपराः सञ्जाताः। भारतास्तु देववाणीमब्रुवन्। तेभ्यो वेदानां साहित्यिकनिधिरपि देवेभ्यः प्राप्तः। ते सत्कर्मसु व्यापृता अभूवन, यतो देवाः सत्कर्मभिः प्रसन्ना भवन्ति। असत्कर्मभ्यस्ते भीता आसन्, यतः पापकारिणो जनान् देवा दण्डयन्ति। गीतानुसारं तु—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

तस्मै भगवते सर्वं वस्तु जातं समर्पणीयं न हि किञ्चित् स्वकीयमस्तीति।

प्राचीनयुगे ब्रह्मचारिणो ब्रह्मज्ञानेन ब्रह्मसंस्था भवितुं ब्रह्मचर्यमचरन्। गृहस्था ब्रह्मयज्ञे शिष्येभ्यो ब्रह्मज्ञानं दत्तवन्तः, देवपितृयज्ञयोर्देवार्चनं तर्पणञ्च कृतवन्तः, भूतयज्ञे सर्वेषां प्राणिनां दिव्यस्वरूपं हृदि धारयन्तस्तेभ्यो भोजनमर्पितवन्तः, अतिथियज्ञे

च विष्णुरूपमेवातिथिं सम्मान्य तं सत्कृतवन्तश्च। वानप्रस्था मुनयस्तपसा तत्त्वज्ञानेन ब्रह्मविद्यारहस्यं ज्ञातुमयतन्त। संन्यासिनस्तु योगैर्ब्रह्मसंस्था एवाध्यात्मिकमानन्दमन्वभवन्।

प्राचीनेभ्यो भारतीयेभ्यः सर्वं देवकृपायामायत्तम्। इदमेवानुसृत्य गीतायां दर्शितम्—

देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥

देवा नाम स्वयमेव चतुर्षु वर्णेषु गुणकर्मविभागशो विभक्ताः। तेषां सामाजिकव्यवस्थाऽस्माभिःस्वीकृता। एतदनुसारं पुरुषस्य ब्रह्मणो वा मुखबाहूरुपादेभ्यः क्रमशो ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा उत्पन्नाः सन्ति।

'पुरा भारतीयानां शिल्पकलासाहित्यादिप्रवृत्तयः सामान्यतो देवपरा आसन्' इति कलाकृतीनां पर्यालोचनेन निःसन्दिग्धमेव प्रतिभाति।

भारतस्येमामेव देवपरायणतामाश्रित्य राष्ट्रस्य सांस्कृतिकैक्यं सुप्रतिष्ठितम्, 'वसुधैव कटुम्बकमिति' भावना प्रादुर्भूता च।

भारतीयसंस्कृतौ धर्मपदस्यातिव्यापकविवृतिर्वर्तते। प्रायः सर्वे ते नियमा धर्मे समावेशिता यैर्व्यक्तेरभ्युदयेन सह समाजस्याधिभौतिकाध्यात्मिकोत्कर्षाः सम्भाविताः। जीवनस्य प्रथमश्वासतोऽन्तिमश्वासपर्यन्तं प्रतिक्षणं मानवेन कथं व्यवहर्तव्यमिति धर्मो बोधयति। अस्यां स्थितौ मानवः प्रतिपदं धर्मेण नियन्त्रितोऽस्ति। धर्मस्यैतन्नियन्त्रणं मानवं दासीकृत्य तद्विकासे बाधकं न भवति। स धर्मः सांस्कृतिकोत्तराधिकाररूपो निधि-

भवति। तस्य निदर्शनेन पुरुषस्य व्यक्तित्वं सर्वोच्चं विकसति। धर्मे प्रायस्त एव सिद्धान्ता गृहीता येषामनुभूतिः समाजाग्रणीनां महाजनानां सत्यप्रयोगे समजायत।

भारतीयेषु धर्मग्रन्थेषु निर्दिशितं यन्मानवः संस्कारैः स्वयो-ग्यतां कथं वृद्धिं गमयेत्, चतुराश्रमेषु स्वव्यक्तित्वं कथं विकासयेत्, चतुर्वर्णका जनाः सामाजिकव्यवस्थायां कथं व्यवहरेयुः, व्यक्तित्व-विकासाय कीदृशं भोजनपेयादिकमुपयुक्तं भवति, कथं शरीरं शुद्धयेत, कीदृशे गृहे, ग्रामे प्रदेशे वा निवसेत्, को व्यापारः सेवनीयः, के मनोरञ्जनविधयः परित्याज्याः, राजा न्यायालये रणाङ्गणे च कथमाचरेत्, प्रजापालनस्य के श्रेष्ठनियमाः, शिल्पकलानां के उच्चादर्शाः, स्वकुटुम्बे समाजे च नागरिकः परस्परं कथं व्यवहरे-दिति एते विषया धर्मग्रन्थेषु निर्दिशिताः। एतदतिरिक्ता देवसम्बद्धाः कर्मकाण्डविशेषयका आचाराख्यापका स्वर्ग-नरकनिरूपकाः सिद्धान्तास्तु धर्मग्रन्थेषु प्राप्यन्त एव। ईदृशी धर्मपरता भारतीयसंस्कृतेरनुपमविशेषता।

प्राचीनयुगे आधिभौतिकाध्यात्मिकपद्धत्योरुपासका भारता-श्चरमामुन्नतिमधिजग्मुः। आधिभौतिकमार्गानुसारिणो जनाः सांसारिकैश्वर्यसम्पन्ना बभूवः। आध्यात्मिकपद्धतिरता आरम्भ-काले निवृत्ताधिभौतिकसमस्तपरिग्रहाः समजायन्त। अध्यात्म-परायणान् जनान् समाजः सर्वाधिकं सम्प्रतिष्ठापयामास। सम्रा-जोऽपि तेषां समक्षं नतमस्तका आसन्। अस्यां दशायां गृहस्थाश्र-मानन्तरं वानप्रस्थे प्रवृत्ताः सन्तः पदवृद्धिमेवामन्यन्त ते।

'मनुष्यः स्वकर्मफलं भुङक्ते' इति सर्वासु भारतीयसंस्कृतिषु कर्मफलस्य प्रतिपत्तिरभूत्। कर्मणः फलमस्मिञ्जीवने प्राप्यत एव।

अतः परमपि मरणोत्तरकाले स्वर्गे नरके नानाविधयोनिषु पुनर्जन्मना परिभ्रमणेऽपि कर्माणि न त्यजन्ति कर्त्तारम्। विश्वासेनानेन भारतीयसमाजे सदाचारस्य महती प्रतिष्ठा संजाता, मानवीयाः पुण्यमय्यः प्रवृत्तयः प्रादुर्भूताश्च।

प्रायः सर्वे प्राणिनः स्वसुखाभिलाषुकास्तेषां प्रवृत्तयश्चात्मसुखपरा भवन्ति। किन्तु सर्वेषां सुखस्य कामना भारतीयसंस्कृतेः वैशिष्ट्यम्। भारतीयसंस्कृतौ एतदुत्कृष्टतरापि सा भावना सम्प्रतिष्ठिता यया "स्वार्थो यस्य परार्थ एव स नृणामग्रणीः" इति सिद्धान्तितम् भर्तृहरिः सत्पुरुषप्रवृत्तिमित्थं व्याख्याति—

'एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये।' इति। इदमेव निर्धार्यं भारते सुकृतिन आत्महिताय तादृशानि वस्तूनि स्वल्पं भुक्तवन्तो येषामधिकोपयोगेनापरे कष्टमनुभवन्ति। एष सिद्धान्तादर्शो वैदिकजैनबौद्धसंस्कृतिषु समानं प्रतिष्ठापितः। सर्वेषां धर्माणां शिक्षावचनानि—'मा कञ्चिद् दुखिनं कुरुत। परदुःखापनोदाय सर्वथा सदैव समुद्यता भवत, अन्येषामुन्नतयेऽनिशं कामयत।' सर्वेषां सुखं तदा सम्भाव्यते यदा परोपकारार्थं जनाः स्वयं स्वकीयं सुखसाधनं परित्यक्तुं समुद्यता भवन्ति।

'लोककल्याण-कर्तृत्वमेव परमं कारणं माहात्म्यस्य' इत्येकमेव वैशिष्ट्यं भारतीय-संस्कृतेः। लोककल्याणं नाम प्रायशः त्यागवृत्त्या, आत्मसुखनिरपेक्षतया, श्रमशीलतया, सेवाधर्मेण, योग्यताधानेन च संसाध्यम्। लोककल्याणवृत्त्या हि देवर्षीणां ब्राह्मण-क्षत्रियाणां मातापित्राचार्याणां वा परमं पदं ज्यैष्ठ्यं च प्रमाणितम्।

स्वाभ्युदयार्थं याः सांस्कृतिकव्यवस्थाः परिकल्पितास्ता सर्वत्र

विश्वेऽस्मिन् सर्वलोकोपकारार्थं प्रसरेयुरिति भारताः प्रायतन्त। एतस्मिन् पराक्रमे भारतीयसंस्कृतेरुन्नायकाः प्रेम-सेवा-सहिष्णुता-विनयादीनात्मगुणान् साधनीकृतवन्तः। एतमेव सांस्कृतिकविन्यासं सम्राडशोको धर्मविजयनाम्ना ख्यापितवान्। 'सर्वे सुखिनः सन्तु' इत्यनुसारं 'सत्यं शिवं सुन्दरं' सर्वेभ्यः स्युरिति विश्वासपरा भारता अद्यापि राजन्ते।

भारतीयसंस्कृतेः प्रायः सर्वेषु क्षेत्रेषु निःसीमत्वं दृश्यते। सांस्कृतिकाभ्युत्थानाय काले-काले वहुविधा योजना निर्मिताः किन्तु तासां निर्मातारः कदापि स्वयोजनायाः सर्वोत्कृष्टत्वं न प्रत्यपादयन्। अस्यां दशायां संस्कृतेरनुसन्धाने विज्ञानदर्शन-प्रवृत्तयश्च देशकालभेदेन न्यूनाधिकं सम्मानिता वभूवुः। यत्र कुत्रापि कश्चन मानवः समाजो वा प्राक्तनप्रतिपत्तेरुच्चतराः प्रतिपत्तीः सन्दृष्टवान्, स पूर्वप्रतिपत्तिमत्यक्त्वापि नवीनप्रति-पत्तिं गृहीतवान्। इत्थं भारतीयसंस्कृतेर्महावनं प्रत्यक्षमिवा-भाति। दार्शनिकभूमौ निःसीमताया अनुपमं दृश्यं गीतायां लभ्यते।

विशालेऽस्मिन् भारतप्राङ्गणे वहुसंख्यकानां जातीनां वर्गाणाञ्चैकसूत्रेणोपनिवन्धनं भारतीयसंस्कृतेरनेनैव वैशि-ष्ट्येन सम्यक् साधितमिति।

निःसीमतानुसन्धानपरा विद्वांसः परिग्रह-पराङ्मुखा आसन्निति नात्राश्चर्यकारणम्। यतः

शीतं हुताशादपि दैवयोगात् संजायते चन्द्रमसोऽपि तापः।
परिग्रहात् सौख्य-समुद्भवोऽत्र भूतोऽभवद्भाविन मर्त्यलोके॥

## १५. काव्येऽलंकारः

अलङ्कारो हि नाम काव्यशोभाकरो धर्मः। काव्यं च शब्दार्थमयमिति प्रायः सर्वेषामालङ्कारिकाणां सिद्धान्तः। काव्येन शब्दार्थयोः सम्बन्धस्तु सुधीभिः 'काव्यस्य शब्दार्थौ शरीरमिति' निर्णीतम्। एवं च शरीरं विना शरीरिणोऽनवस्थानात् शब्दार्थयोर्मुख्यत्वं प्रति न कापि विप्रतिपत्तिः। तच्च शरीरं मनुष्यशरीरमिव न केवलं स्वरूपत एव रमणीयम्। लोके तावद् रमणीयं कदाकृति चैतदुभयविधं दृश्यते शरीरम्। काव्ये पुना रसजीवितभूतेऽरमणीयतायाः सर्वथा परिहारो वाञ्छितः। अतः काव्ये तावेव शब्दार्थौ प्रयुज्येते यौ रमणीयौ। शब्दार्थयोः सर्वविधदोषरहितत्वे सिद्ध एव ताभ्यां काव्यशरीरनिर्वाहः सम्भवति।

तथानिष्पन्नेऽपि काव्यशरीरे तावतैव नोद्देश्यसिद्धिः। दोषाभावमात्रस्य गुणत्वायोगात्। अतः निर्दुष्टत्वमात्रे सिद्धेऽपि काव्यं न चारुतावहम्। तथात्वे पुनर्व्याकरणसूत्राण्यपि काव्यत्वं लभेरन्, तेषु दोषाभावत्वात्। काणत्वखञ्जत्वादिदोषरहितमपि शरीरं यथा मनोहरणाय कमपि विशेषमपेक्षते, तद्वदेव दोषरहितं काव्यशरीरमपि।

किं तत् साधनमिति प्रश्नस्तु न दुरुत्तरः। यथा हि अङ्गनाशरीरं स्नाननिर्मलं, चन्दनसुरभितं, पट्टकौषेयभूषितं, कज्जलालक्तकादिरंजितं, हारकुण्डलवलयादिमण्डितं सदेव पश्यज्जनाकर्षि भवति, तथैव काव्यमपि काव्यशास्त्रलक्षितैर-

लङ्कारैः सुशोभितं मनोहरणाय प्रभवति। तथात्वे सत्येव कान्तावत् काव्येन श्रोतृपाठकानामभिमुखीकरणं तद्द्वारेण च सदुपदेश-प्रदानं विलक्षणं संसिद्ध्यतः। अत एवोक्तं वामनाचार्येण—'काव्यं ग्राह्यमलंकारात्, सौन्दर्यमलंकार इति च। दण्डिभामहोद्भटादयो वामनपूर्वकालिका रुद्रटानन्दवर्धनाभिनवगुप्तपादादयश्च तदुत्तरभाविन आलंकारिकाः स्वस्वविशिष्टसिद्धान्तस्थापकाः परस्परविरोधिनोऽपि अलंकाराणां सौन्दर्याधायकत्वविषये तु निर्विरोधाः।

यद्यपि ध्वनिप्रस्थानानुयायिनो विद्वांसः काव्यात्मत्वेन ध्वनिमेवामनन्ति, तथापि तैर्नालंकारा उपेक्षिताः। अंगित्वेन रसध्वनिमेव निवेशयन्तस्ते अंगरूपेणालंकारान् कामयन्ते। काव्येषु तस्य प्राधान्यं ध्वनिसम्प्रदायस्य मुख्यप्रवक्तॄणा-मन्यतमैराचार्यसम्मटभट्टैः स्वकीये काव्यलक्षणे 'अनलंकृती पुनः क्वापि' इति तद्व्याख्याने च, सर्वत्र सालंकारौ क्वचित्तु स्फुटालंकारविरहेऽपि न काव्यत्वहानिः' इति च वाक्यं योजयद्भिः प्रदर्शितमेव। ध्वनिवादिनां विरोधस्तु नालंकाराणामुपा-देयत्वं प्रति किन्तु तेषां काव्यात्मभूतत्वं प्रत्येवेति ज्ञातव्यम्। यथोक्तमेव साहित्यदर्पणे विश्वनाथेन सालंकारशब्दार्थयोरपि काव्ये उत्कर्षमात्राधायकत्वमिति।

किञ्च, गुणीभूतव्यङ्ग्यस्य भेदप्रदर्शनमुखेनापि अलंकारस्य वैशिष्ट्यं सूचितवान् ध्वनिकारः। वस्तुव्यङ्ग्यस्यालंकारध्वने-र्गुणीभूतत्वं निषिध्य तस्य ध्वन्यङ्गत्वं तेन निर्दिष्टम्—

व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तिस्तदाश्रया॥

अत्र च हेतुत्वेन काव्यव्यापारस्यालंकाराश्रयत्वं प्रतिपादितम्। एवं च काव्ये अलंकाराणां शोभाधायकत्वं तावन्निर्विवादम्। यथा हि हारकेयूरादयोऽलंकारा अङ्गानि शोभयन्तः परम्परया अङ्गिन उत्कर्षमादधति, तथैव काव्यालंकारा अङ्गभूतौ शब्दार्थौ मण्डयन्तोऽङ्गिनं रसमुपकुर्वन्ति। लोकवदेवात्रापि अंगद्वारेणांगिन उपकारकत्वमलंकाराणाम्। शब्दार्थरूपे काव्यशरीरे द्विधाऽविभक्ते तद्गता अलंकारा अपि शब्दगता अर्थगताश्चेति द्विधा भिद्यन्ते। तत्रानुप्रासयमकश्लेषादयः शब्दगताः, अर्थगता पुनरुपमारूपकोत्प्रेक्षादिभेदेन बहवः।

अत्र तु न विस्मर्तव्यं यदेतेऽलंकाराः शोभाधायका अपि व्यर्थतामीयुर्यदि प्राणभूतं रसं नोपकुर्युः। एतदेव खल्वलंकाराणामलंकारत्वं यदङ्गद्वारेणाङ्गिन उपकारकत्वम्। शवशरीरं यथालंकारशतैरपि न शक्यतेऽलंकर्त्तुं तद्वदेव नीरसं काव्यं केवलमलंकारयोजनेनैव न चारुतामावहति। रसनिरपेक्षतया प्रयुक्तोऽलंकारः करोतु नाम शब्दार्थयोरन्यतरस्योभयस्य वाङ्गस्य शोभाधानं किन्तु अङ्गिनिरपेक्षस्य तस्य शोभा शोभैव न भवति। अतएवोक्तं मम्मटाचार्येण—

उपकुर्वन्ति तं सन्तं योऽङ्गद्वारेण जातुचित्।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः॥

प्राणभूतस्य रसस्यानुगुण्येन प्रयुक्ताः सन्त एव सार्थकतां व्रजन्त्यलंकारा इतरथा तु शवभूषणानीव शब्दार्थवैचित्र्यमात्राधानेन भारभूतास्ते व्यर्था एव। एवञ्चात्र निष्कर्षः, नान्यनिरपेक्षा अलंकाराणां भूषणता, रसं प्राणभूतमपेक्ष्यैव तेषां शोभाजनकत्वमिति।

शोभाधायकतातिरिक्तमपि विद्यते महत्त्वमलंकाराणाम्। वैदिककालादारभ्यैव दृश्यते प्रयोग एतेषाम्। वस्तुतः संहिताभ्य एवैतेऽलंकारा लौकिकभाषायां समागताः। कः पुनर्वैदिक-ऋषीणामलंकारप्रयोगे हेतुरिति पर्यालोचनेन स्पष्टं प्रतीयते यन्न ते मन्त्रद्रष्टारः केवलं शोभाधायका इत्येवालंकारान् प्रयुक्त-वन्तः। याथातथ्येन तत्त्वं विवृण्वन्तस्ते ध्रुवमलंकारान् पर्यं-त्यक्ष्यन्, यदि नामैते तत्त्वप्रतिपादने साहायकं नाचरिष्यन्। अतः तत्त्वबोधनेऽपि दृश्यते समुपयोगोऽलंकाराणाम्।

तत्त्वं हि नाम न कदापि निरलंकृतैर्वाक्यैः प्रकाशयितुं शक्यम्। अत एव सर्वत्रोपनिषदादौ जगन्मूलभूतं ब्रह्म सालं-कारैरेव वाक्यैः प्रतिपादितम्। 'वेदाहमेतं पुरुषं महान्तमादित्य-वर्णं तमसः परस्तात्', 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्', 'मृगो न भीमः कुचरो गिरिष्ठाः', 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इत्यादिश्रुतिवाक्यानि प्रमा-णम्। अलंकारादीनां ज्ञानवतो वेदार्थपरिज्ञानेऽपि परमावश्य-कम्। वेदार्थबोधोपायत्वमिदमलंकाराणां परिलक्ष्यैव समीक्षक-धुरीणो राजशेखरो विद्यास्थानेषु साहित्यविद्यायाः 'पञ्चमी साहित्यविद्येति' पञ्चमत्वं, वेदाङ्गेषु च व्याकरणादिवदुपयोग-भागिति अलंकारशास्त्रस्य सप्तमाङ्गत्वं 'उपकारकत्वादलंकारः सप्तममङ्ग' मित्येवं निर्दिशति।

एतेनैव सार्धं लघुनोपायेन विवक्षानिवृत्तिरपि चारुतरं साध्यत एभिरलंकारैः। परिमितैः पदैः कविमनोगता भावा अलंकारसमाश्रयेणैव निपुणं प्रकाश्यन्ते। अनेकैः पदैर्यो भावः सम्यङ् न प्रतिपाद्यते, स एवालंकारविशेषद्वारेण स्वल्पैः पदैस्तथा

संकेत्यते, यथा सहृदयानां चेतः प्रसीदति। अत्र दृष्टान्तः। कस्यचित् सत्यप्रतिज्ञत्वे विवक्षिते बहुभिस्तदभिधायकैर्वाक्यैर्न तथा कार्यसिद्धिर्यथा 'अयमसौ हरिश्चन्द्रः' इतिरूपकोपादानेन स्यात्। एवं च वागाडम्बरपरिहारेण गद्यं पद्यं चोभयमेव युगपदलंकृतं शरदभ्रमिव लघुसञ्चाररमणीयं सम्पाद्यालंकारा महदुपकुर्वन्ति कवीन्।

इत्थं तत्त्वप्रतिपादनेऽपि सहायभूता अलंकाराः शोभाधायकत्वाद् अर्थवैशद्यसम्पादकत्वादंगिनो रसस्य परिपोषकत्वात् कविप्रतिभोल्लासहेतुत्वाच्च काव्येषु नितरां महत्त्वभाजः तेषामध्ययनं ज्ञानमार्गानुसारिणामपरिहार्यम्।

## १६. कविः कालिदासः

यद्यपि लोकत्रयातिशायिगुणमहिमावतारा: सुबन्धुवाणभारवयो भूरयः सूरयो भरतलीलाङ्गणभूतं भारतदेशं स्वपावनपावनैः कृत्यैः सुतरां समलञ्चक्रुः, परन्तु कविताकामिनीविलासस्य कालिदासस्य स्मृत्वा चेतो विमनायते। हृदयं चिन्तातल्पमञ्चति, वेगारम्भिणा विपाक्तेन शल्यशकलेन विद्धं शतधा प्रयाति च, यदा मनसि सम्यगाकलय्य विचार्यते, यद् येन भारतीमुकुटरत्नेन गुरुगौरवास्पदम्, संस्कृतसाहित्यमौलिमालायमानानि च काव्यानि विनिर्मितानि, येन सकलसंस्कृतसाहित्यसारसमन्वितानि, सहृदयहृदयकण्ठहारायितानि नाट्यानि विरचितानि, तस्यैव कलिकुलगुरोः कालिदासस्य जन्मकालविषयकं किमपि समुचितं प्रमाणं न प्राप्यतेऽस्माभिः। कं प्रदेशमलञ्चकार स महाकविः स्वजन्मना, कदा बभूवार्यदेशे भारते कालिदासीयं युगम्, कदा नु स्वर्गमारुरोह—इत्येतादृशाः प्रश्ना यदा समुज्जृम्भन्ते, तदा चेतो दन्दह्यते। एतत्सर्वमस्माकं कृते त्रपास्पदमेवास्ति।

परन्तु भारतस्य कृते सर्वमेतद्दोषविषयं नोपैति। अद्यापि तस्य महाकवेः कीर्तिः समुद्रपारङ्गताऽपि वडवाग्निज्वालेव निर्वाणं न गच्छति। विद्वज्जनजनन्या वीणातन्त्रीमास्फालयन्त्या भगवत्या सुरभारत्या सरस्वत्या दिवानिशं तस्य कीर्तिगीतिर्गीयते। तस्यैव काव्यनैपुण्यं स्मारं स्मारं मुकुलीकृतसहस्रफणाटोपः प्रलयकालावशिष्टो भगवान् शेषोऽपि हास्यमुपैति।

किं बहुना। स्रष्टुः सृष्टिरचनाचातुरी विरमति स्वनियोगात् अभिज्ञानशाकुन्तलकारस्य काव्यनिर्माणप्रणालीं विचिन्त्य।

यद्यपि कालक्रमेण भौतिके संसारे कालिदासस्य विद्यमानता नास्ति, परन्तु सुरभारतीसमुपासकैरद्यापि स उपश्लोक्यते। कालिदासशिखण्डिनः केका अद्यापि जनमनस्सु मुदं विकर्षति। प्रतिभया काव्यततीरातन्वन्नुपमया महाकवीनां मदं चूर्णयन्, प्रकृतिमनुपालयन्, ललितललनालावण्यलीलालयं दर्शयन् किं न कृतवान् सकलकविमौलिमालालालितचरणकमलो वनदहन-द्योतविद्योतमानो भारतीविलासः कालिदासः।

कामं सन्तु सहस्रसंख्यायां विद्यमानाः कविमूर्धन्याः काव्याङ्गणे, परन्तु कालिदासं विहाय संस्कृते न कस्यापि कवेर्विजय-वैजयन्ती दोधूयमानाद्यापि राराजते। 'अस्मिन्नतिविचित्रकवि-परम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय' इति गण्यन्ते इत्येव ध्वन्यालोककारस्यानन्दवर्द्धना-चार्यस्य भणितिः। साहित्यस्य सर्वस्मिन्नपि विषये कालिदासः कवीनां प्रत्यादेशः। काव्यविषयकं किमपि वर्णनं महाकविना न त्यक्तम्। प्रतीयते यत् कालिदासगुणलुब्धा प्रकृतिनायिका सहर्षं तं वरयाञ्चकार। अस्मादेव कारणात् प्रकृतिवर्णनानि महत्त्व-शालीनि सन्ति। न केवलं प्रकृतिसौन्दर्यमेव कालिदासेन दृष्टं परन्तु तस्या रहस्यमपि साधु ज्ञातम्।

कालिदासीयकाव्येषु यदा मधुर्मधुरतामातनोति, तदा शरीरिणां दशा विचित्रा संजायते। वैदर्भीरीतिरञ्जिता प्रकृतिरितस्ततोऽटति लास्यं प्रदर्शयन्ती। कालिदासकोकि-लानां काऽपि दशाऽपूर्वाऽस्ति। कूजितै रसिकमनांसि समुल्लास-

यन्तो, लयैर्लोकलोलालयं विलयं प्रापयन्तः, सर्वदिग्गामिभिर्ध्वं-निर्भिर्दिक्करिकर्णरन्ध्राण्यास्फोटयन्तोऽकामिषु कामभावं प्रेरयन्तः कं प्राणिनममन्दानन्दसन्दोहसमन्वितं कर्तुं न प्रभवाः सन्ति कालिदासस्य कोकिलाः। परभृतानां कूजितमाकर्ण्य वधूजनः स्मरवशं जगामेति कालिदासो बभाषे रघुवंशे।

प्रकृत्यपराङ्मुखी कालिदासस्य काव्यरचनाप्रवृत्तिः। सर्वाण्यपि प्रकृतिवर्णनानि संसूचयन्ति, यत् प्रकृतिविषये प्रकृतकविरन्यान्कवीन्द्रानतिशेते। कालिदासलेखनीप्रसूता ललितदर्शना मुनिजनकरपल्लवपालितास्तिरस्कृतजगद्रूपा अरण्योद्भवा मृगा अत्यन्तमेव प्रभावोत्पादकास्सन्ति। मन्ये कालिदासो हरिणैर्हरिणाङ्गनाभिश्च सह चिरं चिक्रीड। शकुन्तलायाः पतिगृहगमनकाले मृग्यो दर्भकवलानुद्वमन्तिस्म शोकाकुलाः। यदा विविधविकल्पविमथितमतिः लोकाभिरामो रामो जनकतनयां तत्याज, तदा हरिण्यस्तस्या दशामवलोक्योपात्तान् दर्भान् विजहुः। नार्यो नारीणां दुःखावस्थां दृष्ट्वा कष्टमनुभवन्ति इति सांसारिकं सत्यं प्रदर्शयता, कालिदासेन स्वकाव्यकलाया अद्भुतं वैशिष्ट्यमभाणि। मृगेणैव दुष्यन्तस्य चेतसमाकृष्टम्। मृग एवाभिज्ञानशाकुन्तलनाटकस्य सूत्रधारः। अतो मृगस्य स्वभावस्यानवद्यं वर्णनं कविनाकारि। मृगीचित्रण, मृगचित्रणे च कालिदासस्य समानभावः। यदि कुमारसम्भवे कृष्णसारो मृगीमकण्डूयत, तदाभिज्ञानशाकुन्तलनाटके 'शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्' इत्येव वर्णनं प्राप्यते।

कविकौशलनिकषायितं कुमारसम्भवं प्रणीय कालिदासो नवां कीर्तिमवाप। सर्गस्थितिसंहारकारणस्य शङ्करस्य समाधिं,

जगज्जनन्या उमायास्तपस्यां च प्रदर्श्य कवीन्द्रोऽनिर्वचनीयामभिख्यां जगाम्। हिमालयस्य हृद्यं वर्णनं कृत्वा कविः स्वकविताया अनघं मानदण्डं विद्वन्निवहानां पुरतः समुपस्थापितवान्।

कुमारसम्भवस्य कामदहनप्रसङ्गोऽद्याप्यक्ष्णोः पुरो नरीनर्ति। प्रसङ्गस्तु विदुषामप्यत्यन्तमेव विस्मयावहः। विश्वं विश्वमपि जेतुमुद्धुरकन्धरः पुष्पेषुः शचीशस्य निदेशमुररीकृत्य जिगीषया ध्यानावस्थितं भूतेशमुपसर्पति। तदा न केवलं शरीरी एव कामास्त्रेण क्रोडीकृतः, परन्तु लताललनाभिस्साकं विलासं कुर्वाणाः परवशास्तस्थुस्तरवोऽपि। यदा स्वदर्पदावानले ज्वलन् कन्दर्पः शिवे पुष्पशरं संजघान तदा जृम्भमाणं रुद्रमन्युं निवारयितुमक्षमा नभोमण्डले मरुतां गिरश्चरन्ति स्म। अस्मिन्नेव काले शिवनेत्रजन्माग्निः कामं भस्मावशेषं कृतवान्। अस्मिन्प्रसङ्गे कालिदासोऽस्मान् साधूपदिशति यत् विकारकारणे विद्यमानेऽपि येषां जनानां चेतांसि विकारं न गच्छन्ति, त एव धैर्ययुक्ता जनाः। रतिविलापविषयेऽतीवमनोज्ञा कालिदासीया कल्पना प्रसरति। रतिविलापं विभाव्य विभाव्य कस्य सचेतसो मनो न दूयते। वैधवीकला विधुमनुगच्छति, तडिज्जलदमनुसरति, प्रमदाऽपि पतिमार्गं विडम्बयति। एतादृशी भूरिभावनाभरिता भारती कालिदासीयकाव्य एव ननर्त। यद्यपि लुलितं लावण्यं समुल्ललास शिवाया विग्रहे, परन्तु प्रियोपेक्षिता सा स्वसौन्दर्यस्य साफल्यं नामंस्त। अतो हि सांसारिकं सुखमवगणय्य, बंहीयसोऽपि क्लेशानवहेल्य, गुरोराज्ञामुपेक्ष्य, पादपपत्राण्यप्यभ्यन्तरीकृत्य च शिवप्राप्त्यर्थमपर्णा स्वकीयं शरीरमपि व्यस्मार्षीत्।

तपः साफल्यार्थमेव कल्पते। एतत्सर्वं कविः स्वकाव्यमार्गेण प्रदर्शयति।

संस्कृतसाहित्याकाशेऽभिज्ञानशाकुन्तलं नाटकं दिनमणिरिव प्रचाकशीति। अधुनापीदं नाटकं शृङ्गाररससुधावर्षिण्या वाण्याऽऽकण्ठं विदुषां मनस्सु हर्षप्रकर्षमातनोति। एतन्नाट्यरत्नमाश्रित्य कालिदासस्यादभ्रगुणमण्डिता कीर्तिर्विदेशेष्वपि प्रससार। भव्यभारतीभवनायमानानां पाश्चात्यविद्वदपश्चिमानां गेटेजोन्सादिमहोदयानां कालिदासमहत्त्वनिष्यन्दिन्यो भणितयोऽद्यापि सहृदयानां मनांस्युपोद्वलयन्ति। जगद्रमणीमण्डलमण्डनायमानया शकुन्तलया निश्चितमेव नारीसौन्दर्यं प्रत्यादिष्टम्। यदा शकुन्तलाया दिव्यं वपुःसौन्दर्यं ददर्श दुष्यन्तस्तदा तस्याः स्नेहोदधौ पपात। ध्रुवं सा मानवी नारी नासीत्। कुतो वसुधातलात् ज्योतिरुदेति। एतादृशानां दिव्यपात्राणां विद्यमानता कालिदासीयकाव्येषु भवति। सकललोकबालकललामभूतो भारततातो भरतोऽद्यापि स्वामलयशसाऽन्धान्धकाराच्छन्नं जगन्नितरां धवलयतितराम्। अहो धन्यास्ति विश्वकवेः काव्यरचनाकला या एतादृक्पात्राणां चित्रं तूलिकया चित्रितवती। चित्रमस्ति, कियान् शौर्यप्रकाशो व्यद्योतिष्ट शकुन्तलासुतशरीरे यः स्वभूम्ना धाम्ना सिंहशावकवीरत्वमपि धूलीचकार। दुष्यन्तचरित्रचित्रणमपि महाकविनाऽनाकुलमाकलितम्। प्रजारक्षणदक्षस्य दुष्यन्तस्य पौरुषस्य [परीक्षणं कृत्वा मातलिराश्चर्यं प्रपेदे भृशं तुतोष च। एतद्दुष्यन्तस्य वैशिष्ट्यं यत् वीरा अमरा अपि कल्पव्रततिवस्त्रेषु तस्य चरितं समुट्टङ्कितवन्तः। यद्यपि महाभारते दुष्यन्तस्य चरित्रं नीचै-

रञ्चति, परन्तु कालिदासेन एतत् सर्वं परिष्कृतम् । अत्र दुष्यन्तः शशाङ्क इव प्रतिभाति। यदा शकुन्तला तस्य दर्शन-मार्गेऽवतरति तदा स मनसि करोति यदेषा क्षात्रग्राह्या यतोऽस्या विषये मामकीनं मनः प्रवर्तते। पापादृते दुष्यन्तः प्रजानां सर्वाणि कार्याणि कर्तुमलमस्ति। कौपीनवासास्त्यक्तहास-श्शमी कण्वोऽपि शमसीमामानमुल्लङ्घ्य शकुन्तलास्नेहातिम्र-दिम्नाऽऽयत्तीकृतः प्राकृतजन इव कारुण्यसागरे ममज्ज, गरी-यसीं दुःखासिकां शिश्रिये च। हास्यरसार्द्रीकृतानि प्रियंवदा-वचांस्यपि लोकानां चेतांसि चमत्कृतानि कुर्वन्ति। एषाऽ-कुण्ठितमतिवैभवस्य कालिदासस्य काव्यशक्तिर्यत्कारणात् स महाकवित्वपदवीमारुरोह। धन्यास्त्युर्वश्या लावण्यस्याक्लिष्टता या पुरूरवसश्चेतश्चञ्चरीकं प्रसभं समाचकर्ष। अबलाबाला-परिचारिकया मालविकया युवजनोन्मादिनी काऽप्यपूर्वा यौवनश्रीरलम्भि याऽग्निमित्रस्य चेतोऽलुलुण्ठत् । एतादृशी नारीसौन्दर्यवर्णना कालिदासीयकाव्येषु समुपलभ्यते।

मेघदूतं गीतिकाव्येष्वन्यतमं वरीवर्ति। अस्यां नूतन-भावनाञ्चितायां कृतौ कविः कल्पनाम्बरे डीयमानो दरीदृ-श्यत। जाज्वल्यमानायां दीर्घवियोगज्वलनज्वालायां ज्वलन् यक्षो स्वकीयां प्रियां प्रति कियतीं शोकसम्भारसम्भृतां वाक्पर-म्परामाततानेति न प्रच्छन्नम्। क्रोडे वीणां निक्षिप्य किमपि लिखन्ती यक्षप्रिया न केवलं साम्प्रतिकैः कामिकलापैर्भूयोभूयः स्मृतिपथमानीयते, परन्तु साहित्यरसज्ञैरभिष्टूयते च। मेघदूते चित्रितामवस्थां ध्यायं ध्यायमद्यापि भारतलोकः स्वकीयां पुरातनीं दशां बोबोद्धि।

रघुवंशे कालिदासस्य प्रशंसास्पदं चरित्रं समुज्जृम्भते। 'मन्दः कवियशःप्रार्थी' इतिकथनशंसनाम्भसा किं कविः शरीरस्थं कालुष्यपङ्ककलङ्कं ममार्ज? नहि, नूनं तेन स्वहृदयस्य नैर्मल्यं प्रादर्शि। अस्मादेव कारणाद्दिलीपरघुरामादीनां कीर्तय इव तस्यापि कीर्तयश्चतूरत्नाकरमेखलाभूषितायां वसुन्धराया-मद्यापि भ्रमन्ति। कीर्त्या प्रदीप्तो दिलीपः प्रसवलाभार्थं किं किं दुःखं सोढुं न शशाक। गोरक्षणार्थं भूयिष्ठप्रियं वर्ष्मापि मदोद्धताय हर्य्ये प्रदातुमैच्छत्। तस्य गोसेवायाः स्मृत्वाऽधुना-तनो लोकसंदोहो विस्मयते। विश्वजिति यज्ञे प्रदत्तसर्वधनोऽपि धर्मधुरिधौरेयो धराधवो रघुर्वरतन्त्वन्तेवासिने कौत्साय धनं दातुकामो धनोद्धताद्धनदाद्धनं निष्क्रष्टुमियेष। एतादृशाः कालिदासीयकाव्यनरेन्द्राः। दशमुखशोभाविलासविरामो रामः प्रजाप्रीत्यै जनकतनयां तत्याज, इत्येषुवर्णनेषु कृत्वा कविः कालि-दासः शिक्षां ददाति।

रघुवंशस्य स्थलद्वयं मनो दुःखाकरोति। अजविलापः सीता-परित्यागश्च। यथा कुमारसम्भवे प्रियतमे उपरते प्रिया रतिः करुणक्रन्दनैः कण्ठं कदर्थयतिस्म, तथैव प्रियायां मृतायां पति-रजोऽप्युच्चैर्विललाप। कविना दुःखानुभूतिः सम्यक् कृतेत्य-वधार्यते। यदा सीता रामेण परित्यक्ता, तदा तस्या दशां दर्शं दर्शं वनस्थाः मयूरा अपि नर्तनकर्मणि न प्रवर्तन्तेस्म, अनोकहाः कुसुमानि त्यक्त्वा दयां प्रदर्शयन्ति स्म च।

प्रायशः कालिदासीयकाव्येषु नाट्येषु च दिव्या शक्ति-राश्रयरहितस्य जनस्य साहाय्यं करोति। यथा दुष्यन्तपरित्यक्तां शकुन्तलां दिव्या शक्तिः परिरक्षति तथा सीतामपि वाल्मीकिः।

कालिदासस्यादर्शो महानासीत्। रघुवंशस्य प्रथमसर्गस्य श्लोकाः प्रतिपादयन्ति यत् वैशिष्ट्यसम्पन्नं भारतराष्ट्रराजकमासीत्। अखण्डभारतस्य भव्यं रूपं कालिदासस्य ग्रन्थेषु परिलक्ष्यते। द्राक्षारसादप्यधिकमधुरा, वैदर्भीरीतिसंवलिताः, प्रसादगुणगुम्फितास्सूक्तयः कालिदासीयाः कै रसिकैर्न स्वाद्यन्ते।

संक्षेपतस्तु हिमालय एव तस्यार्यावर्तकवेर्मानदण्डः। आध्यात्मिकतैव तस्याधारः। प्रकृतिरेव तस्य नायिका। उपमा एव तस्य लीला। भारतत्वमेव तस्य जीवितम्। सुरभारती एव तस्य माता उदधिरेव कालिदासीयभारतभूमिसीमा।

## १७. ऋतूनां रामणीयकम्

नमो भगवते वेधसे यः ऋतून् प्रादुर्भावयति। 'ऋतूनां कुसुमाकर' इति सर्वोपनिषत्सारभूतायां गीतायां प्रतिपादयता भगवता वार्ष्णेयेन वसन्तस्य वैशिष्ट्यं व्याख्यायि। अहो प्रमोदावसरः। सकलसंसारविजिगीषोर्विषमेषुभूपतेर्निदेशं शिरस्यादाय, प्रसुप्तमिव लोकं विलोकं विलोकमुन्निद्रयन्निव च तम्, सान्त्वयन्निव शैत्यसन्तप्तानि जन्युजीवितानि, पाययन्निव मधुमधुरान् सुधाकल्पान् सहकाररसान् रसिकरसनाभ्यः, समुल्लासयन्निव कामिकामान् विजृम्भते ऋतुराजो मधुः। अस्मिन् ऋतौ शमनस्य महिषबलेन विधुरीकृता भास्करहया भियैव सोच्छ्वासास्त्यक्तदक्षिणाशा आलम्बन्ते धनदाशाम्। अतो दिनकरोऽपि उत्तरां दिशं प्रति प्रयाति।

कुसुमशोभासम्भृतां कम्रां चापि विनम्रां लवङ्गीं लतामालिङ्गन्, कमलिनीं सरसमभिचुम्बन्, केतकलतां पुलकयुक्तां कुर्वन्, दोलारूढाङ्गनाङ्गक्लेदसञ्जातस्वेदजलजालं विद्रावयन्, नीलोत्पलदलमुकुलं कम्पयन्, कुसुमसौरभैर्जगद्दन्तुरयन्, मुहुर्मुहुः प्रसर्पन्, सर्प इव कामिजनेभ्यो हालाहलं समर्पयन् मलयाचलपवनः प्रवाति। कदाचित् कासारपानीयेषु सिस्नासुर्बुद्बुदेन साकं लीलां विदधाति। कदाचिद् वनाजिरे चिक्रीडिषुरान्दोलयति तरून्। वसन्ते उपवनस्य शोभा विचित्रा एव दृश्यते। मधुकराक्षी, सरसीरुहानना, किसलयपाणिशालिनी, कुसुमहासा, ज्वलदङ्गारविजितवर्णा, मनोज्ञा ... च वनस्थली-

नायिका विश्वेषां चेतांसि विमोहयन्तीवावलोक्यते। बकुल-पाटलामधूकमल्लीलवलीसुमादिषु गतागतं विधायापि अलब्ध-तोषो मधुपः सहकाररसान् पातुमेव भूयोभूयः प्रवर्तते। अतो नहि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदालि-रिति रघुवंशे समभाषिष्ट कालिदासः। मञ्जु गुञ्जन्तो मिलिन्दाः कामनृपस्य यशांसि गायन्त इव प्रतीयन्ते। किं कुसुममरन्दान् पीत्वा गुञ्जनमिषेण तानुद्वमन्ति मधुकराः? इत्यपि प्रश्नः संजायते। सहकाराङ्कुरचर्वणाद् विशदकण्ठपुटा कलकण्ठ-मण्डली कोमलपञ्चमस्वरमिषेण कर्णकुहरेषु सुधाझरीं वर्षन्तीव स्वाखण्डं पाण्डित्यं व्यनक्ति। वीणाया रणनं विगणयत्, मरन्दं मन्दयत् कलकाकलीकलनपूजितं कोकिलकुलकूजितं हृदयमानन्दयतितमाम्। कोकिलानां कूजितं समाकर्ण्य विगत-मानाः कामिजनाः प्रसन्नाननाः सञ्जायन्ते। यद्यपि पुष्पभरैर्न-मन्तः किसलयैरुल्लसन्तो वृक्षाः कान्ते वसन्ते शोभां किरन्तोऽव-लोक्यन्ते, परन्तु भव्यगुणविशाले रसाले काप्यद्वितीया सम्पत्ति-र्विराजते। अलिकुलझङ्कारैर्मुखरीकृताः सहकारा नितरां शोभन्तेतराम्। आम्रमञ्जरीणां रजोभिः पिञ्जरीकृताः सकलाः ककुभो राराजन्ते। तापक्षुधातृषासमापकानि माधुर्यधु-र्याणि सहकारफलानि भूयसे लाभाय कल्पन्ते। सहकारफलानि मधुकराणाम् अभिलाषं तूर्णं प्रपूर्णं कुर्वन्ति, कामस्य कामं पल्लव-यन्ति च। मधुव्रतानां व्रातैरावृता व्रतत्यस्तरुभिः साकं विलासं कुर्वत्यो वसन्ते मोदन्ते। चित्रमस्ति यत् चैत्रमासि कामिनीनां पादाघातादशोको विकसति। अस्मिन् ऋतौ भटेन कामेन दिव्या-स्त्रघटेव सज्जीकृता चम्पककोरकावलिः परिलक्ष्यते। धिगेतं

पलाशम्, यः कामिलोकं परेतपालितलोकस्याध्वनि अध्वनीनं विधाय सगर्वं पलाश इति नामाद्यापि अङ्गीकृत्य स्वजन्म कलङ्कयति। सौन्दर्येण विश्वेषां चेतांस्याकर्षयदपि सौरभ-विरहितं कर्णिकारं पुष्पं घ्राणेन्द्रियस्याप्रियं भूत्वाऽपि दर्शनाय रोचत एव।

स्रोतस्विनीनां सरसां च पयांसि संशोषयन् भृशं भीष्मो ग्रीष्मनामा ऋतुः प्रवर्तते। दवीयानपि दिनकरो दिनवृद्धिमाप्य करत्विषा अगान् म्लापयन् जगत्तापयति। क्रूरकराश्रयोष्णा समीरा विश्वस्य तापं पुष्णन्ति। उद्दामचण्डांशुकरतापतप्ता, घनघर्मखेदं लघूकर्तुं बद्धपरिकरा अध्वगा पीयूषं स्रवन्ती-र्वृक्षच्छायाः संश्रयन्ते। पिपासवः पान्थसार्थाः पयांसि सरसां पायं पायं न तृप्यन्ति। सरसाः कौपीरपः पीत्वैव प्राणी सन्तोष-मावहति। सुतरां तृषाकुलो भास्कर आपगानां भूरि वारि पिबति। चण्डांशुखरकिरणान् सोढुमसमर्था जना दिनपर्यन्तं गृहमधिवसन्ति। दिवा निदाघकालोऽग्निस्फुलिङ्गानुद्गिरति। धाराजललवैर्विलोलव्यजनोत्पन्नैः पवनैश्चाढ्यानामौष्ण्यं लघू-क्रियते। दिगन्तरालेषु स्वं प्रतापं प्रथयन्निव दिनाधिनाथो दिनं यावज्ज्वलति।

निदाघकाले क्षणदाः क्षयं यान्ति, दिनानि वृद्धिं गच्छन्ति च। प्राणिनः सूर्यममित्रं मन्यन्तेऽस्मिन् ऋतौ। प्रकृतिसुधावर्षी शर्वरी-श्वरः खरद्युतितप्तानां प्राणिनामत्यन्तमेव प्रियो वर्तते रात्रौ। स्पृहणीयोऽपि स्पर्शनः सूर्यौष्ण्यसमायोगात् सूर्यकान्तमणिरिव ज्वलन् लोकैर्न पूज्यते। औष्ण्यं निवारयितुकामाः कासराः कासारेषु दिनं यावत् निलीना वर्तन्ते। आश्चर्यमस्ति यत्

नायिका विश्वेषां चेतांसि विमोहयन्तीवावलोक्यते। बकुलपाटलामधूकमल्लीलवलीसुमादिषु गतागतं विधायापि अलब्धतोषो मधुपः सहकाररसान् पातुमेव भूयोभूयः प्रवर्तते। अतो नहि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदालिरिति रघुवंशे समभाषिष्ट कालिदासः। मञ्जु गुञ्जन्तो मिलिन्दाः कामनृपस्य यशांसि गायन्त इव प्रतीयन्ते। किं कुसुममरन्दान् पीत्वा गुञ्जनमिषेण तानुद्वमन्ति मधुकराः? इत्यपि प्रश्नः संजायते। सहकाराङ्कुरचर्वणाद् विशदकण्ठपुटा कलकण्ठमण्डली कोमलपञ्चमस्वरमिषेण कर्णकुहरेषु सुधाझरीं वर्षन्तीव स्वाखण्डं पाण्डित्यं व्यनक्ति। वीणाया रणनं विगणयत्, मरन्दं मन्दयत् कलकाकलीकलनपूजितं कोकिलकुलकूजितं हृदयमानन्दयतितमाम्। कोकिलानां कूजितं समाकर्ण्य विगतमानाः कामिजनाः प्रसन्नाननाः सञ्जायन्ते। यद्यपि पुष्पभरैर्नमन्तः किसलयैरुल्लसन्तो वृक्षाः कान्ते वसन्ते शोभां किरन्तोऽवलोक्यन्ते, परन्तु भव्यगुणविशाले रसाले काप्यद्वितीया सम्पत्तिर्विराजते। अलिकुलझङ्कारैर्मुखरीकृताः सहकारा नितरां शोभन्तेतराम्। आम्रमञ्जरीणां रजोभिः पिञ्जरीकृताः सकलाः ककुभो राराजन्ते। तापक्षुधातृषासमापकानि माधुर्यधुर्याणि सहकारफलानि भूयसे लाभाय कल्पन्ते। सहकारफलानि मधुकराणाम् अभिलाषं तूर्णं प्रपूर्णं कुर्वन्ति, कामस्य कामं पल्लवयन्ति च। मधुव्रतानां व्रातैरावृता व्रतत्यस्तरुभिः साकं विलासं कुर्वत्यो वसन्ते मोदन्ते। चित्रमस्ति यत् चैत्रमासि कामिनीनां पादाघातादशोको विकसति। अस्मिन् ऋतौ भटेन कामेन दिव्यास्त्रघटेव सज्जीकृता चम्पककोरकावलिः परिलक्ष्यते। धिगेतं

पलाशम्, यः कामिलोकं परेतपालितलोकस्याध्वनि अध्वनीनं विधाय सगर्वं पलाश इति नामाद्यापि अङ्गीकृत्य स्वजन्म कलङ्कयति। सौन्दर्येण विश्वेषां चेतांस्याकर्षयदपि सौरभ-विरहितं कर्णिकारं पुष्पं घ्राणेन्द्रियस्याप्रियं भूत्वाऽपि दर्शनाय रोचत एव।

स्रोतस्विनीनां सरसां च पयांसि संशोषयन् भृशं भीष्मो ग्रीष्मनामा ऋतुः प्रवर्तते। दवीयानपि दिनकरो दिनवृद्धिमाप्य करत्विषा अगान् म्लापयन् जगत्तापयति। क्रूरकराश्रयोष्णा समीरा विश्वस्य तापं पुष्णन्ति। उद्दामचण्डांशुकरतापतप्ता, घनघर्मखेदं लघूकर्तुं वद्धपरिकरा अध्वगा पीयूषं स्रवन्ती-र्वृक्षच्छायाः संश्रयन्ते। पिपासवः पान्थसार्थाः पयांसि सरसां पायं पायं न तृप्यन्ति। सरसाः कौपीरपः पीत्वैव प्राणी सन्तोष-मावहति। सुतरां तृषाकुलो भास्कर आपगानां भूरि वारि पिबति। चण्डांशुखरकिरणान् सोढुमसमर्था जना दिनपर्यन्तं गृहमधिवसन्ति। दिवा निदाघकालोऽग्निस्फुलिङ्गानुद्गिरति। धाराजललवैर्विलोलव्यजनोत्पन्नैः पवनैश्चाढ्यानामौष्ण्यं लघू-क्रियते। दिगन्तरालेषु स्वं प्रतापं प्रथयन्निव दिनाधिनाथो दिनं यावज्ज्वलति।

निदाघकाले क्षणदाः क्षयं यान्ति, दिनानि वृद्धिं गच्छन्ति च। प्राणिनः सूर्यममित्रं मन्यन्तेऽस्मिन् ऋतौ। प्रकृतिसुधावर्षी शर्वरी-श्वरः खरद्युतितप्तानां प्राणिनामत्यन्तमेव प्रियो वर्तते रात्रौ। स्पृहणीयोऽपि स्पर्शनः सूर्यौष्ण्यसमायोगात् सूर्यकान्तमणिरिव ज्वलन् लोकैर्न पूज्यते। औष्ण्यं निवारयितुकामाः कासराः कासारेषु दिनं यावत् निलीना वर्तन्ते। आश्चर्यमस्ति यत्

दिनस्य विषमेऽनेहस्यपि वराकाः कृषकाः स्वान्नियोगान् सम्पादयितुमुत्कमनसः संलक्ष्यन्ते। तिग्मांशुः प्रभूतं तापमातनोति तीक्ष्णांशुभिस्तृणसमूहं भस्मसात् करोति च। अस्मिन् ऋतौ यदा कदा नभो धूलिधूसरितं भवति।

ग्रीष्मे ऋतौ पृथिवी शस्यरहिता दृश्यते। वृक्षाः कान्तिमपहाय शोकान्विताः सञ्जायन्ते। लता विपाण्डुतां भजन्ते।

अथाहस्करखरकरपरिखेदितानि हरिन्मुखानि जलैरार्द्रयन् विद्युद्वह्निज्वालाकरालोऽब्दकालः स्फुरति। निदाघकालस्य शौर्यं प्रद्योतनं संहृत्य जलधरो जलधारा वर्षति। शरीरतापमपास्य यथा घनो जनमाह्लादयति तथा पङ्कं परिपोष्य दुःखमपि जनयति च।

भयङ्करावर्तसहस्राकुलास्तटिन्यो जलरयैः स्वकीयानि तटानि विपाट्योन्मार्गं प्रयान्ति। ग्रामेषु तोयैः पङ्कैश्च पूर्णाः पन्थानोऽध्वगानामलङ्घ्यभावं प्राप्नुवन्ति। वर्षाकाले गृहे निवसन्तो जनाः सुखमनुभवन्ति। तदा स्वकीयं दयितं हंसं मानसरोवरं प्रति गच्छन्तमवलोक्य तत्प्रिया कमलिनी वियोगाज्जलराशौ निमज्जति। निशाकरे दिनकरे च प्रच्छन्ने सति, दुर्दिने प्रवृत्ते, जलदेऽभ्युदिते च विश्वं निबिडेऽन्धकारे निलीयते। स्तनयित्नुर्गर्जितं श्रावं श्रावं जातहर्षाः केकिसमूहाः कुटजपुष्पदिग्धायां वनभूमौ नरीनृत्यन्ते, स्वानवद्याभिः केकाभिर्जनमनांसि प्रीणयन्ति च। शैत्यमावहन्तो, लोकाय तोषं किरन्तः, कम्पितकदम्बवनाः प्रबलाः प्रभञ्जनाः प्रवान्ति। जनानां हर्षमुत्पादयन्तो, महावनानां दावाग्निज्वरं मुष्णन्तः, आर्त्तस्वराणां चातकानां श्रेयांसि सम्पादयन्तो जलदा दृश्यन्ते।

अस्मिन् काले घनघरट्टेन घृष्टस्य चन्द्रस्य खण्डा इव वलाकाः दिवि शोभन्ते । केतकीनीपादिवृक्षाणां पुष्पपरागं दिक्षु विदिक्षु किरन् पवनः प्रवाति।

यदा वर्षाकाले साटोपमारटन्तो, नभोमण्डलेऽटन्तो, वारणानां घटनां विडम्बयन्तो वार्धिविषपानपिचण्डिला वलाहका जलानि उद्गिरन्ति, तदा हर्षप्रकर्षमातन्वानाः कर्षका गृहेभ्यो निःसरन्ति स्वक्षेत्रं प्रति स्वकीयानि जीवितान्यप्युपेक्ष्य। प्रावृषि विद्युतः कर्मापि स्तुत्यम्। अन्धे तमसि स्फुरन्त्यश्चञ्चुरा अचिरद्युतयो वातायनविवरगताभिः स्वप्रभाभिस्तुङ्गसौधक्रोडे सुप्तानामङ्गनानाम् अङ्गान्युद्भासितानि कुर्वन्ति। प्रावृषि कदाचिज्जलदा अनेकानि दिनानि वर्षन्ति। प्रावृषः श्यामा क्षपा कालायते। पार्श्वस्थं वस्त्वपि नाऽवलोक्यते। अयम् ऋतुः कृषकाणामत्यन्तमेव प्रियः। पृथ्वी शस्यसङ्कुला, जलपूर्णा च संलक्ष्यते । हरिच्छाटिकाऽऽवेष्टिता वनभूमिः प्रमोदाय कल्पते। आकाशे शक्रधनुरुदयं प्राप्य नेत्रेभ्यः सुखं प्रयच्छति। जलं पातुकामा घोरमारवं कुर्वती जलस्थिता मूर्खमण्डूकमण्डली स्वघोषपरम्पराभिः श्रोत्ररन्ध्रमापूरयति। वर्षाकालस्य सरोऽपि अकूपारायते।

घनागमं विजित्य शरपूर्णदिगन्तरः शरदृतुः समायाति। अस्मिन् ऋतौ अमृतोदधिडिण्डीरपिण्डपाण्डुरा वारिदडम्बरा अम्बरे संलक्ष्यन्ते। प्रीत्या कलमान् बिभ्रती शुकपङ्क्तिश्चकास्ति नभसि । सागरशत्रावगस्त्येऽभ्युदिते सति खिन्नानना इव सागरस्त्रियो निम्नगा अनुदिनं कार्श्यमाप्नुवन्ति। कुमुदैर्हासं प्रदर्शयन्ती सुधाकरानना विमलाम्बरा शरतप्रिया कस्य सचे-

तसो मनो न प्रसादयति। पुण्डरीकाणां नवोद्भवं मकरन्दं पिबन्तो मञ्जु गुञ्जन्तो मधुपाः कमलिनीं मुहुर्मुहुश्चुम्बन्ति। विततसितविताने वियति विद्यमानो यामिनीकामिनीचन्दन-विन्दुरिवेंदुः सुधापूर पूर्णैरिव कौमुदीपातैः प्राणिवर्गाणां प्राणानुज्जीवयन्नितरां दीव्यति। अस्मिन् ऋतौ प्रियकबाण-जवासप्तच्छदपुष्पैर्विभूषिता, रुचिरान्नविपाकैः पिशङ्गीकृता पङ्करहिता अनाविलेला प्रसन्ना प्रतिभाति। शालिक्षेत्ररक्षणार्थं वद्धमण्डलाः सरामा ग्रामीणग्रामा आलापततिभिर्दिवसं रात्रिं च यापयन्ति। हंसा मानससरः प्रत्यागच्छन्ति स्वकलविरुतैर्मयू-राणां केका विजित्य मोमुद्यन्ते च। निर्मलवारिपूरितानि सरांसि श्वेतरुचा विधुमण्डलं विडम्बयन्ति। क्षेत्रेषु सारसरसितानि श्रूयन्ते। दिशो निर्मला भवन्ति।

जनानां दिवसजातं श्रमं निवारयितुकामः क्षपा दीर्घाः कुर्वन् हेमन्तसमयः समागच्छति। अस्मिन् काले लब्धावसरो हिमः खरद्युतेस्तेजो विलुण्ठ्य, चन्द्रमसः श्रियं न्यक्कृत्य च कमल-वनानि कवलीकरोति। सहो मित्रमवाप्य तुष्टो हिमो हर्षमा-तनोति। पवनवेगेन कम्पितानां प्रियङ्गुवनानां रेणवो वियति विसर्पन्ति। श्वेतरोध्रपरागभरधूसरो मधुकरः कमलिनी-वियोगादाकुलितो भूत्वा पाण्डुरतां दधाति। नीहारसम्भारशीतं जलं लोकेभ्यो न रोचते। दिनानि कार्श्यमाप्नुवन्ति, रात्रयो वृद्धिम् ऋच्छन्ति च। अग्निर्लोकस्य प्रीत्यै कल्पते। अस्मिन् ऋतौ शमनो नृपो हिमसाहाय्यादनल्पमधर्मं समाचरति। अनेके प्राणिनो हिमनष्टा गतासवः सञ्जायन्ते। शैत्यं सक्षोभं सर्वं जगद् बाधते। शिथिलकिरणो रविरपि लोकस्य हितं कर्तुं

नालम् भवति। धन्यास्ते निर्धना ग्रामीणाः सन्ति ये हिमकालेऽपि कार्यं कुर्वन्तो दरीदृश्यन्ते।

अथ कुन्दरदः शिथिलकमलचरणः शिशुः शिशिरः समायाति। वसुन्धरा निर्मलकुन्दपुष्पैः स्मितमातनोति। नवयवाङ्कुरे स्थितास्तुहिनशीकरकणा मोदमातन्वन्ति। तुषारव्याजाद्दिगङ्गना असितवासांसि दधति। माघेन विघ्नितोत्साहानि कपिकुलान्यपि पदक्रमे नोत्सहन्ते। प्रतीयते यदस्मिन् ऋतौ सूर्यो रात्रौ फणिविष्टपे व्रजति, अतो जलानि कूपानां तस्य चिरसङ्गवशादुष्णत्वं भजन्ते। शिशिरः सर्वं संसारं हिमगुणैर्जयति। प्रदीप्तोऽग्निरपि माघे मोघत्वमुररीकरोति। आश्चर्यं वर्तते यत् स्त्रीणां करैः स्थापिता भस्ममहावसना अपि हुतभुजो हिमैर्द्रुत इव सञ्जायन्ते। हिमभयान्मदनः पद्मदृशो हृदि निवासं कुरुते। हिमभियेव तारकावलिराकाशं त्यक्त्वा कुन्दकोरकव्याजात् कुञ्जमधिवसति। नूनं शीतपवनस्पर्शाद् विमुक्तोऽनङ्गः स्वानङ्गत्वमुत्तमं मन्यते।

यदा कदा ऋतावस्मिन् जलद उपलं वर्षति। अस्मात् कारणात् शस्यस्य महती हानिर्भवति। मेघाच्छन्नेऽह्नि दिनकरोऽपि न प्रकाशते। लोका दिनपर्यन्तमाश्रयन्ते गृहकक्षामेव। अग्निरेव शरणं प्राणिनाम्।

## १८. 'उत्तमं हि धनं विद्या दीयमानं न हीयते'

लोकेऽस्मिन् निरूढप्रायेवेयं धारणा यद्धनमेवैकं जगतो व्यवहारमूलम्। ऋते चास्मान्न शक्यसम्पादः सुखलेशोऽपीति। आमन्त्रिपुङ्गवं आ च हालिकं पांसुलपादं दृश्यते हि सर्वो लोकः धनमेवाऽहर्दिवं चिन्तयन् तदेव स्तुन्वन् तल्लिप्सयैव च शश्वदात्मानमुद्युञ्जानः नैककार्यनिवहेषु। एतन्मूला एव चेमे 'धनमूलमिदं जगत्' इत्यादय आभाणकाः। सम्यग्विचारतोऽपि इदमेव प्रतिभायाद्यदिदं धनस्य प्राधान्यं नातितरां दूरे याथार्थ्यादिति। नैकशः किलास्माभिरध्यक्षीक्रियते कीदृशो वा सम्मानादिलाभः सदगुणदरिद्राणामपि वित्ताधीशानाम्, कियान् वा खेदः गुणरत्नाकराणामपि निर्धनानामस्मिञ्जगतीति। अतएव किल मरणमेव श्रेयो दारिद्र्यादिति प्रतिपादयति शूद्रकः—

"दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम्॥"

स एव च वर्णयति निर्धनस्य दुस्सहां दुरवस्थाम्—

"दारिद्र्याद् ह्रियमेति ह्रीपरिगतः सन्त्यज्यते तेजसा।
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते॥
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते।
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम्॥"

इदन्त्विह विचारणीयम्—किं वित्तादात्यन्तिकमेवोपलभ्येत सुखमिति। नेति वदामः। सुखं हि नाम अन्तःकरणवृत्तिविशेषः, यः किल सुशकः सम्पादयितुं नैकैरुपायविशेषैः,

येषु शक्नुयात् कदाचिद्धनमप्यन्यतमतामवाप्तुम्। यतो धनमिदमनैकान्तिकं दृश्यते सुखसम्पादने । भवति हीदं धनं सुखस्येव नैकविधस्य दुःखस्यापि कारणम्। प्रसिद्धश्चायमाभाणकः—

"अर्थानामर्जने दुःखम् अर्जितनाञ्च रक्षणे।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम्॥"

शङ्करभगवत्पादाश्चाहु :—

"अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः॥"

अपि च दृश्यन्ते किलाद्यत्वे परःसहस्राः पाश्चात्त्याः, निर्धनताकथानभिज्ञानामपि येषां न संतोषकलामप्यधिगन्तुं शक्नोत्यन्तरङ्गम्, येषु च शृणुमः, उन्मादरूपो मानसो विकारः आत्महननाध्यवसायश्च प्रतिदिनमुपचीयेते इति। उपलभ्यन्ते च केचिन्महापुरुषा ये विनाप्यर्थम् आनन्दतुन्दिलान्तरङ्गाः। लक्ष्यीभवन्ति 'ते ,सन्तुष्टे मनसि च कोऽर्थवान् को दरिद्रः' इत्यादिसूक्तिव्रातस्य अतश्च केवलमापेक्षिकीयं आनन्दहेतुता धनस्येति नैवास्योत्तमं स्थानं प्रदातुं प्रभवामः।

परन्त्वस्त्येवान्यदुत्तमं धनं विद्या नाम, यत् किल सर्वथातिशेते धनमेतल्लौकिकम्। यत इदं निदानं परममानन्दस्य वर्जयति च ,दूरतो धनगतान् दोषान्। श्रूयन्ते हि बह्व्यः सूक्तयः प्रेक्षावतां वर्णयन्त्यः सर्वधनवैशिष्ट्यं सर्वोत्तमताञ्च विद्याधनस्य-

"न चौरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनंप्रधानम्॥,"



अपि च—

'विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्याभोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूजिता न हि धनं विद्याविहीनः पशुः॥

महती खल्वियं विशिष्टता विद्याधनस्य यदिदं यथा यथा व्ययीक्रियते अन्येभ्यो दानेन तथा तथा वर्धत एवान्वहं द्विगुणं त्रिगुणञ्चेति। यथाहुरभिज्ञा—

'अपूर्वः कोऽपि कोशोऽयं सरस्वत्या विराजते।
व्ययतो वृद्धिमायाति क्षयमायाति संचयात्॥'

परन्तु धनान्तराद्विद्याधनस्योत्तमतां प्रतिपादयद्भिर्नैवेदं विस्मर्तव्यम्, विद्योपार्जनेऽपि धनोपार्जन इव तावान् ततोऽप्यधिको वा क्लेशः सोढव्यो नियतमेवेति। तञ्च क्लेशं केवलं कृतश्रमा एव विद्यासु विजानीयुर्नापरे। उच्यते च—

'विद्वानेव विजानाति विद्वज्जनपरिश्रमम्।'

एवं श्रमसमुपार्जितस्येव वित्तस्य क्लेशसम्पादिताया विद्यायाः परिरक्षणमपि भवति महते आयासाय। न खलु पठनपाठनादिभिरनुपस्कृताया विद्याया गतिरन्या वर्तते ऋते दिने दिनेऽपचयात्। तादृशीमेव विद्यामुपमिनोति तत्रभवानादिकविर्वाल्मीकिः शोकपरिक्षीणया भगवत्या वैदेह्या—'आम्नायानामयोगेन विद्यां प्रशिथिलामिव' इति तदेवमर्थानामिव विद्यानामपि विषये वक्तुं शक्यते—

'विद्यानामर्जने दुःखमर्जितानाञ्च रक्षणे, नाशे दुःखम्।'

इत्यादि। अत्रेत्थं समुदियात् प्रश्नः—तर्हि किङ्कृता वा विशिष्टता धनान्तराद्विद्याधनस्य तुल्यत्वे क्लेशानामिति। इत्यमेव विशि-

ष्टता यदव्ययीभाव इति। उक्तमेव किल प्राग् भूयोभूयो दीयमानमपीदं विद्याधनम् उपचीयत एवेति। न जानीमो वयं 'उपार्जितानां वित्तानां त्याग एव हि रक्षणम्' इत्यस्य कियद्वा याथार्थ्यं धनविषये इति। विद्याधनविषये पुनर्दुरपह्नवास्य नितरां सत्यसंवादिता। महानपरोऽयं विशेषः विद्याधनस्य यदिदं कल्पते महते आनन्दविशेषाय, बोधयति च मनुजान् कथं वाऽत्मनः जन्मसहभूः पाशविकी प्रवृत्तिः प्रहातव्या कथञ्च वा दैवी शक्तिः सम्पादनीयेति। अपि च विभिन्नरूपा विद्या भिन्नानि चाभीष्टानि सम्पादयितुमीष्टे मनुजस्येति नूनं महानयं विशेषो विद्याधनस्य। अत एवाह कश्चित् पाश्चात्यपण्डितः का वा विद्या कथं वोपकरोति मनुजे तद्वृद्धौ च गुणानाधातुमिति। बेकनमहाशय उपदिशति—"चित्तस्य चाञ्चल्यमपाकर्तुं गणितशास्त्रमभ्यसनीयम्। विवेकसम्पादनार्थं विद्वच्चरितं परिशीलनीयम्। ऊहापोहशक्त्यै प्राड्विवाकस्मृतिरनुशीलनीया" इति।

परन्तु नेदमत्र विस्मर्तव्यं यदयमुपकारकत्वविशेषो विद्यानामुपकार्यपरतन्त्र इति। विद्या हि केवलमेतदेव दर्शयति मानवम्—अयं पन्थाः समुन्नतये अयञ्चावनतये इति। यद्यन्ततोऽप्ययं गजनिमीलिकया द्वितीयमेव पन्थानमनुगच्छति, किं वा कर्तुं शक्नोति वराकीयं विद्या। एतदेव सूचयति भगवती श्रुतिः—

"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते।"

इत्युपवर्णयन्ती आत्मविद्याप्रस्तावे। इयदेव तु प्रयत्यते करुणावशंवदया विद्यया यदयं मानवः क्रियासमभिहारेण वा मया

प्रदर्शितं पन्थानं दर्शं दर्शं श्रावं श्रावञ्च कदाचित् दैवीं सम्पदमियादिति। एतदेव हि विद्याया विद्यात्वं यत् ज्ञानकरणत्वं नाम।

तुल्येऽपि च विद्यात्वे काचिद्विद्या सम्पादयति कमपि फलविशेषं, अन्या च अन्यादृशम्। अत एव ह्यस्याः द्वैविध्यं वर्णयति श्रुतिः—"द्वे विद्ये वेदितव्ये इति ह स्म ब्रह्मविदो वदन्ति, परा चैवापरा च। तत्रापरा ऋग्वेदो, यजुर्वेदः, सामवेदोऽथर्ववेदः, शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते" इत्यादि। तदेवम्—

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थञ्च विद्या अष्टादशैव ताः॥"

इत्युपवर्णितानामष्टादशानामपि विद्यानामपरतां, परताञ्चाध्यात्मिकविद्याया निश्चिन्वती श्रुतिः स्फुटमेव विविनक्ति तत्सम्पाद्येऽपि फलद्वये एकमितरस्मात्।

इदं पुनरत्रावधारणीयम्—द्वेऽपीमे परापरे विद्ये तदैव प्रयच्छतः फलमत्युत्तमं यदैते परस्परमुपस्कुरुत इति। विश्रुतमेव किलेदं श्रुतिषु यदपरैव विद्या श्रद्धाद्यैरन्तर्येणान्वास्यमाना परायै विद्यायै सम्पादयत्यर्हतां मनुजानाम्, ऋते तु केभ्यश्चिदङ्गुलीगणनीयेभ्य आजानसिद्धेभ्यः। अपरा अपि विद्या तदैव प्रभवति लोके क्षेमं सम्पादयितुं यदा साध्यात्मिकी परा विद्या अस्याः नियमनं कुर्वीत। अयञ्च विशेषः, अधिगतायां यथार्थतः परायां विद्यायां सर्वथापि निवृत्तिः अपराया विद्यायाः। अपरा पुनः सर्वदापि परया समुपस्कृतैव विन्दते योगक्षेमसाधनताम्। अन्यथा

कीदृग् वा भवेत् फलमिति प्रत्यक्षत एव पश्यामोऽस्मिन्काले यत्र हि आध्यात्मिकतागन्धशून्या अधुनातनी विद्या कुक्षिंभरतैक-परायणाञ्जनयति नैकान्नृपशून्। मन्ये परापरयोर्विद्ययोस्सा-दृश्येनेदृशी वर्णयितुं शक्या 'अवरा विद्या' इति, यया हि नित्य-प्रसृतया आचार्याः पाठकाश्च 'अन्धेनैव नीयमाना यथान्धा' इति न्यायेन विशन्तो दृश्यन्ते अन्धतामिस्रम्। अतश्च सात्त्विकी एव विद्या आत्मनः न केवलमुत्तमधनताम्, उत्तमोत्तमधनतामपीष्टे सम्पादयितुम्। तत् समर्थितं केनापि विचक्षणेन—

'विद्या लोचनमद्भुतं परपदं पश्यन्ति यद्वैभवात्।
विद्यैका तरणिर्दृढा भवमहाम्भोधिं तितीर्षोः कृते।
विद्यैवापचयात् परेह विभुता यां लब्धवान् स्यात् कृती।
किं ब्रूयां यदि साधनं ननु दृढं विद्यैव नान्यत् क्वचित्॥'



## १९. 'सुकविता यद्यस्ति राज्येन किम्'

'यदसेवनीयमसताममृतप्रायं सुवर्णविन्यासम्।
सुरसार्थमयं काव्यं त्रिविष्टपं वा समं विद्य:॥'

विदितचरमैवेतत् सर्वेषां विपश्चिदपश्चिमानां यदियमखिलस्यापि जन्तो: साधारणी कामना—'सुखं मे भूयात्, असुखञ्च माभूत्।' उपलब्धुमैवैतत्सुखमानन्दापरपर्यायं नेकैनैकविधानुपायानाददते। परिहर्तुमिच्छन्ति च तदन्यथाभावहेतून्। उपायभेदश्चायं वहुधोपलक्ष्यमाण: प्राय उपेयानन्दभेदपरतन्त्र इति तल्लिप्सूनामभिलाषवैचित्र्यमेव सूचयति। तथा हि, अर्थानेवानन्दमूलमुत्पश्यन्त: केचित्तानेवार्जयितुमहर्निशमायस्यन्ति; वैषयिकानन्दस्यैवानन्दतामङ्गीकुर्वन्तश्चान्ये तल्लाभायैव प्रयतन्ते। अपरे च अभिप्रयन्ति यश एव शाश्वतिकानन्दहेतुरिति। तदर्थञ्च नैकानि कष्टानि सानन्दमनुभवन्ति। केचित्पुन:—

"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हत: षोडशीं कलाम्॥"

इत्यादि चिन्तयन्त:, नीरागतामेव च परानन्दहेतुं स्वीकुर्वन्तस्तामेव समीहन्ते सम्पादयितुम्। सन्त्यन्येऽपि केचिद्ये काव्यादीनानन्दहेतुतया उपादित्सन्ते। तदेवमधिकारिभेदादिव दृश्यन्ते नैके भिन्नभिन्नान्यानन्दसाधनानि ग्रहीतुकामा:।

लोके निश्चितप्रायमिवेदं यदर्था एव आनन्दस्यैकान्तिकं मूलमिति। अथवा किमित्यानन्दस्येति, शिष्टस्य पुरुषार्थत्रयस्यापि सम्पादने अर्थ एवायं पुरुषार्थो मूलमिति सोर: परामर्श

प्रतिपादयन्ति केचित्। अत एव च कलयामः नैकानि ईदृगर्थानि सुधियां वचांसि—

"तावद्धर्मकथा मनोभवरुचिर्मोक्षे स्पृहा जायते
यावत्तृप्तिसुखोदयेन न जनः क्षुत्क्षामकुक्षिः क्षणम्।
प्राप्ते भोजनचिन्तनस्य समये वित्तं निमित्तं विना
धर्मे कस्य धियः स्मरं स्मरति कः केनेक्ष्यते मोक्षभूः॥"

इत्यादि। एवं केवलस्यैव वित्तस्यानन्दमूलताऽभ्युपगम्यते, किमुत पुनरुन्नताधिकृत्युपबृंहितस्य रूपयौवनादिभिश्चोपस्कृतस्य। अत एव निपुणतरं निरूपयति भगवती श्रुतिः, "सैषानन्दस्य मीमांसा भवति युवा स्यात्साधु युवाध्यायक आशिष्ठो द्रढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्, स एको मानुष आनन्द इति" मानुषानन्दस्य पराकाष्ठा सम्राज आनन्द इति। साधोरधीतवेदस्य दृढतमस्य बलवत्तमस्य च यूनो निखिलपृथिवीवित्तस्य सम्राज आनन्दोऽत्युत्तमो मानुषानन्देषु। तदेवं राज्यमेव सर्वोत्तममस्मिन्मानुषे लोक इति निर्णीतप्रायमिवेदम्। नेत्याह तत्रभवान् महाराजो भर्तृहरिः। स प्रतिपादयदि पुरस्तात् किल कविताया अकिञ्चित्करं साम्राज्यम् 'सुकविता यद्यस्ति राज्येन किम्' इति। युक्तञ्चेदम्। अमन्दानन्दहेतुतैव किल राज्यस्योत्तमताहेतुः। यद्येवमनुत्तमानन्दनिदानमन्यत्किञ्चिदुपलभ्येत, तस्य ततोऽप्युत्तमतां को वा प्रतिषिध्येत?

तथाहि उत्तरोत्तराभिवृद्धानां देवजातीनां क्रमशः शतगुणोत्तर आनन्दो भवतीति श्रुतिबोधितम्। एवं स्थिते किं वा वक्तव्यमानन्दघनस्य विशुद्धस्य च ब्रह्मणो निरतिशयानन्दत्वे।

विदितमेव च किल काव्यरसाप्लावितहृदयानां सहृदयानां तत्परीक्षाचणानाञ्च विद्वद्गणानां कीदृशं किञ्जातीयकं वा आनन्दविशेषं सम्पादयितुं पार्यते सुकवितयेति। 'सद्यः पर-निर्वृतये' इत्यादि वदन्तो मम्मटभट्टादयः ब्रह्मानन्दसब्रह्मचारितां प्रतिपादयन्ति काव्यानन्दस्य। 'रसो वै सः' इत्यादि श्रुतीरुपष्ट-म्भकतया सङ्गृह्णन् पण्डितराजोऽपि काव्यानन्दस्य निरतिशयतां स्पष्टयति। अतश्च सुस्पष्टमेव कविताराज्ययोः कतरस्य वा उत्कृष्टत्वमिति। अथवा

'न ब्रह्मविद्या न च राजलक्ष्मीस्तथा यथेयं कविता कवीनाम्'

'संसारे कविता यदास्ति सरसा लोकोत्तरार्थोन्नता
येषां हन्त वशंवदा मधुरिमागारं सती सर्वदा।
धन्यास्ते कृतिनस्त एव सुखिनः साम्राज्यभाजोऽमिते
दिव्यं वाप्यपुनर्भवोदितमपि श्रेयो न तेभ्यः परम्॥'

इदमत्र विमर्शनीयम्, किमिदं सुकवितेत्यादि केवलं सहृदयमेव मनसिकृत्योच्यते उताऽहो कविमपि? कुतोऽस्य प्रश्नस्यैवोपस्थितिः? ननु अविशेषेणैवेदमुच्यते—'सुकविता यद्यस्ति राज्येन किम्' इति? बाढम्; परन्त्वानन्दातिशयहेतुता-वशेन किल प्रतिपादितोऽयमुत्कर्षातिशयः कवितायाः साम्राज्या-दपि? तादृशश्चानन्दः सहृदयस्यैवेति किं वापराद्धं वराकेण कविना योग्यमविषयीकृतोऽस्य वाक्यस्य? नैष दोषः। कवेरपि समापितरचनस्य आस्वादसमये सहृदयत्वानपायात। यत्प्रोक्तं साम्प्रदायिकैः—

"नायकस्य कवेः श्रोतुस्समानोऽनुभवस्ततः।"

इतोऽपि कविता साम्राज्यमतिशेतेतराम्। साम्राज्यं हि

सम्राजः केवलं कतिपयवत्सरस्थायिनीं परिमितदेशीयामेव च कीर्तिं सम्पादयितुं प्रभवति, न पुनः स्थास्नुं विततरां वा। कविता पुनः, न केवलमात्मनः आत्मसम्बद्धानां सम्राट्साम्राज्यादीनामपि चिरस्थास्नुं व्याप्तविश्वान्तराञ्च कीर्तिं समुपार्जयतीति नूनं महानयमस्याः प्रभावोत्कर्षः। अत एवाह दण्डी—

"आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम्।
तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति॥"

अपि चापाततोऽनुचितानामिवापि वस्तूनामौचित्यं सम्पादयतीति लोकातिशायिता काचिदपूर्वेयं कविताया। यथाह नीलकण्ठदीक्षितः—

"पारदेश्यं वृथादास्यं पञ्चानामेकदारता।
पाण्डवानामभूत् कीर्त्यै पाराशर्यकवेर्गिरा॥"

किञ्च राज्यं हि नाम राज्ञः कर्म यत् खलु प्राधान्यतः शासनरूपं पारम्पर्येण च पर्यवस्यति प्रजारञ्जने। कविता तु प्रधानतया प्रवर्तते सहृदयमनोरञ्जनाय पारम्पर्येण चानुशास्ति जनान्। कान्तासम्मिततया किलेयमुद्युनक्ति उपदेशाय। महांश्चायं विशेषः कविताया: यदियमविज्ञातमेव सम्यगनुशास्ति सर्वशासितॄनपि राज्यनेतॄन्, प्रवर्तयति तान् सत्पथे निवर्तयति च सदूरमपथात्। तथापि क्वचिदेव राज्यपालकः सम्यक् प्रबुद्धाः सन्ति। प्रायशस्तु ते।

'अन्धाइव न पश्यन्ति योग्यायोग्यं हिताहितम्।
पथा तेनैव गच्छन्ति नीयन्ते येन पार्थिवाः॥'

स्रष्टुर्नीतिभिन्नो ह्ययं कविरात्मनो भावनाबलात्सकलमेव जगत् सचराचरं करतलबदरमिवाध्यक्षीकुर्वन् पारयतीद

यथासमीहितं परिवर्तयितुम्। भावनानैरन्तर्यसंस्कृतविशुद्धान्तरङ्गो ह्यसौ—

"जानाते यन्न चन्द्रार्कौ जानते यन्न योगिनः।
जानीते यन्न भर्गोऽपि तज्जानाति स्वयं कविः॥"

अत एवायं प्रजापतिरित्यभिवर्ण्यते तत्रभवता अग्निपुराणकर्त्रा—

"अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथैवं परिवर्तते॥"

न केवलमतिशयोक्त्याद्युपलक्षितेन वर्णनादिवैचित्र्येण, याथार्थ्यतोऽपि विश्वमन्यथयितुं प्रभवन्तीयं कविता कवयितारं विश्वमोहिनीव माया विशुद्धं ब्रह्म, स्रष्टुः पदमध्यारोपयति। कति वा नाऽभूवन् लोके महाकवयः, ये खलु राजाधिराजानामपि बलमिवातिमहदुपहसन्तीभिः महाप्रभावाञ्चिताभिः कविताभिः लोकस्यास्य चरितं सर्वथा पर्यवर्तयन् अन्यथयाञ्चक्रुश्च गतिं जगतः। किं दूरतोऽन्वेषणेन? शक्येतैव किञ्चिन्निमीलितलोचनैरस्माभिरनुमातुं कथं वाऽभविष्यद् अस्य भारतदेशस्य चरितं यदि कदाचिन्न प्रावर्तिष्यत अत्र कविता सुरधुनी वाल्मीकिव्यासयोरिति। अतश्च पूर्वोक्तं पद्यं किञ्चिदेवं परिकल्पयामः—

अपारे ह्यत्र संसारे कविरन्यः प्रजापतिः।
यथास्मै रोचते विश्वं तथापि परिवर्तते॥



## २०. विद्या ददाति विनयम्

'द्वेषदर्पहता विद्या कामक्रोधहता मतिः।
लोभमोहहतावृत्तिर्येषां तेषां किमायुषा॥'

विनयस्तु स्वस्य परेषां च शान्त्युपलब्धयेऽस्ति। अनेन विहीनः पुरुषः सर्वदा सर्वत्र च परेषां विभूतिमसहमान ईर्ष्याक्रोधद्रोहमोहसम्पन्नो न शक्नोत्यात्महितायाचरितुम्। यावन्न पश्यत्यात्मानं परेषु परांश्चात्मनि तावदविनीतः सन् पुरुषो मानाभिभूतः प्रज्वलत्येव क्रोधाग्नौ।

अपरस्तु

'यावानात्मनि वेदात्मा तावानात्मा परात्मनि।'
'य एवं सततं वेद सोऽमृतत्वाय कल्पते।'

विद्या ददाति विनयमिति पूर्णतः सत्यं किन्तु प्रसंगेऽस्मिन् किंरूपा विद्येति विमर्शार्हः प्रश्नः। नास्ति सर्वविद्यानामयोग्यं यद्वयं विश्वविद्यालये शिक्षामहे। वास्तविकी विद्या सूक्तिभिः परिभाषिता –

'सा विद्या या विमुक्तये।'
'विद्यया विन्दतेऽमृतम्।'
'विद्ययाऽमृतमश्नुते।'
'अथ परा यया तदक्षरमधिगम्यते।'
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते।'



किमु धनैर्विद्यानवद्या यदि।

इदानीं शिक्षा हि धनोपार्जन-साधनमेवास्माकं पतनाय जाता। तद्यथा—

'पुरा विद्वत्तासीदुपशमवतां क्लेशहतये,
गता कालेनासौ विषयसुखसिद्धयै विषयिणाम्।'

यथा हि उपनिषत्सु व्याख्यातं भौतिकद्रव्यसमाहारनियोक्त्री विद्या नैव विद्या भवति। सा विद्या या शास्ति—

'समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥'

'प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसम्
रहस्यं साधूनामनुपधि विशुद्धं विजयते॥'

पुरा हि विद्वांसः परित्यक्तसकलविकाराः सर्वेषु वस्तुषु ईश्वरस्य व्यापकत्वमपश्यन्। तेन हि नासीत् नानात्वस्य भावना तदा। न ते अपरेभ्यो जीवेभ्यो विजुगुप्सन्ते स्म। सर्वेष्वात्मान प्रेक्षमाणास्ते—

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥

विद्याभरेण विद्वांसो विनीता। भवन्ति यथा हि "भवन्ति नम्रास्तरवः फलागमैः।, न कदापि विद्यासमापन्ना विद्वांसोऽपरान् स्वतो नीचतरान् मन्यन्ते। अन्यथा किमस्ति विद्यायाः फलम्। ते सर्वं ज्ञात्वापि किमपि न जानीम इति मन्यन्ते। तदधिकृत्य प्रोक्तं क्षेमेन्द्रण—

'अलोभः परमं वित्तमहिंसा परमं तपः।
अमाया परमा विद्या विरक्ता मनीषिणाम्॥'

'स्पृशति मतिं न हि तेषां द्वेषविषः कलिसर्पः।
यदि शमविमलमतीनां स्वमनसि भवति न दर्पः ॥'

यथा हि सुकरात महोदयः सप्तति वर्षदेशीयः सन् नाहं किञ्चिदपि जानामीति परिगणयन्नेव सन्तुष्टोऽभूत्।

सामान्यतः सर्वेषां प्राणिनां वैयक्तिकमर्यादानुसारं तैः सहोचितव्यवहारो विनयः। प्रायः गुरूणामादरः पूजा च, समवयस्कैः सह मित्रत्वमितरेषां लघुप्राणिनामल्पवयस्कानां च साहाय्यमस्ति विनयः। विनीतो जनो न कस्यापि अवमाननां करोति। इत्थं स सर्वेषां प्रेमास्पदं भवति। गुरव आत्मानुभवेन, मित्राणि साहाय्येन, अपरे अल्पवयस्काश्च पूजया तस्य समृद्ध्यर्थं यतन्ते। सोऽपि लोकसंङ्ग्रहार्थं दिव्यादर्शान् प्रकाशयति सर्वेषामभ्युदयायैव। विद्यासम्पन्नो हि एवं कर्त्तुं शक्नोति यतः स हि स्वार्थो यस्य परार्थं एव स नृणामग्रणीरिति सिद्धान्तानुरूपं सकलजीववर्गाणामुपकारं साध्नोति। स शत्रुमपि शीघ्रमेव मित्रं भविष्यतीति विमृश्योपकारार्हं मन्यते। केनापि कृतमपराधं विस्मरत्येव। अज्ञानवशीकृतः पुरुषो मां प्रति दुर्व्यवहरतीति मत्वा स दुश्चरितपुरुषं दयापात्रं मन्यते। एवं विकसितबुद्धयो हि विनयशीलाः सत्कर्मप्रतिपन्ना अहंभावविरहिता यथार्थविद्याया मूर्त्तरूपा एव।

अधुना विद्वन्नामधारिणो मूर्खेभ्योऽपि हीनतराः क्वचिद्दृश्यन्ते। सततं मोहमायाविपन्ना न ते सन्ति विमलमार्गचारिणः। येन केन प्रकारेण परधनहरणाय विकलमतयस्ते लोकसंग्रहाय न यतन्ते। बाह्याडम्बरसमापन्ना आधुनिकविद्वांसः मरीचिकारूपपाश्चात्त्यसभ्यतामनुसरन्ति। इत्थं विद्या विनयं न दत्वा-

ऽविनयस्यैव कारणं भवति। सत्यं विश्वविद्यालये आधुनिकशिक्षा-समापन्नाः जना स्वदेशस्य सभ्यतामादर्शं शीलं च निन्दन्ति। कस्यामपि आधुनिकशिक्षासम्पन्नानां विदुषां परिषदि तेषामविनयः साक्षात्प्रकटो भवति। एतादृशां नूतन-पण्डितानां विषये क्षेमेन्द्र-स्योक्तिः —

'ग्रीवास्तम्भभृतः परोन्नतिकथामात्रे शिरः शूलिनः
सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः।
अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः
कष्टा नूतनपण्डितस्य विकृतिर्भीमज्वरारम्भभूः॥'

मनुष्यो हि सर्वश्रेष्ठप्राणीह जगति। अविनीतः सन् स कस्यापि देशस्य संसारस्य वात्यधिकां हानिं करोति। तस्य मस्तिष्कशक्तिः तं वहुप्रभावशालिनं करोति। यथार्थविद्याप्रभावेण हि अस्माकं दुष्प्रवृत्तिनियन्त्रणं भवति।

विनयसम्पन्नः पुरुषः सर्वत्र पूज्यते। राम-गौतमबुद्ध-शङ्करा-चार्यादीनां विद्या-विनयोपेतत्वं तेषां लोकप्रियङ्करत्वं द्विगुणी चकार। न कोऽपि भवति तस्य शत्रुः। सर्वविकाररहितः स शाश्वतीं शान्तिमुपभुङ्क्ते। विनयो विद्यायाः परिणामः। विनय-फला विद्या हि कस्यापि पुरुषस्याभ्युदयाय भवति। अन्यथा विद्या-सर्पविषमिवापरान् विनाशयति आत्मानमपि च घृणास्पदं करोति।

भगवच्चरितादर्शेन विनयः सम्प्रतिष्ठितो वर्तते। तथाहि— 'समोऽहं सर्वभूतेषु' 'समः सर्वेषु भूतेषु मदभक्तिं लभते पराम्' इत्यादि। मनुनापि तदेव प्रतिपादितम् —

‘एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्॥’

अथकिम्, विनयस्य महान् प्रभावोऽयम्। अविनयस्य कुतः स्थानं यदा विद्वान् जानाति—

‘स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चन॥’

अथवा—

त्वयि मयि चान्यत्रैको विष्णुः।



२१. बहवो गुरवो लोके शिष्यवित्तापहारकाः ।
विरला गुरवो लोके शिष्यचित्तापहारकाः ।।

विचित्रा हि गतिरधुनिकशिक्षापद्धतेः। नान्तेवासिनां गुरून् प्रति श्रद्धा, शिष्यान् प्रति वा गुरूणां वात्सल्यं दृश्यते। यथापणे क्रेतारो धनं दत्त्वाभिवाञ्छितं वस्तु लभन्ते तथा विद्यालये शिष्यनामधारिणो विद्यार्थिनः शुल्कप्रदानेन दैनिकोपस्थित्या च परीक्षाप्रवेशाधिकारमेव लक्ष्यं मन्यमाना येन केन प्रकारेणोपाधिं प्राप्य धनार्जनाय इतस्ततः परिभ्रमन्तो दासत्वमुपलभ्यात्मानं जनश्रेष्ठान्, कुलचन्द्रान् देशरत्नानि च मन्यन्ते। अहो, न कुत्रापि दृश्यते कृष्णवद् गुरुः । नास्ति च अर्जुनवत् शिष्यो येनोक्तम्—

'कार्पण्यदोषोपहत-स्वभावः,
पृच्छामि त्वां धर्मसम्मूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे,
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ।।'

नास्त्यधुना कोऽपि शिष्यो यथा वरतन्तोः कौत्सः, येन पुरा प्रोक्तम् —

'समाप्तविद्येन मया महर्षि-
र्विज्ञापितोऽभूद्गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां
तां भक्तिमेवागणयत्पुरस्तात् ।।'

अत्र गुरोर्गौरवं सम्यक् प्रदर्शितम्।

तेन यमप्रदेयं राज्यमपि आध्यात्मिकविद्यायाः तुच्छममन्यत।

आधुनिकयुगे साधारणजनानां प्रवृत्तिराधिभौतिकी। विद्यादातणां गुरूणामपि धनदायि-विद्यादानायाग्रहो वर्त्तते। नास्ति 'सा विद्या या विमुक्तये।' ईदृशविद्याप्रभावेण न भवति हृदयमस्माकं विशुद्धम्। कथितमपि कविवरेण भर्तृहरिणा—

'पुरा विद्वत्तासीदुपशमवतां क्लेशहतये,
गता कालेनासौ विषयसुखसिद्धयै विषयिणाम्।
इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखान्
अहो कष्टं सापि प्रतिदिनमधोऽधः प्रविशति॥'

विद्यापारङ्गता आचार्यास्तु

'वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः॥'

ईदृशीं विद्यामधिगन्तुं शिष्या आत्मकल्याणमभिकांक्षन्तः कस्यापि ऋषेराश्रमं गच्छन्ति स्म। तत्र सदाचारेण भक्त्या च शास्त्राधिगमनस्य योग्यतां प्रदर्श्य गुरोः सेवां कुर्वन्तो विद्यां प्राप्तवन्तः। गुरवोऽपि धनं नौगतं जलमिव मन्यमानाः तस्माद्विजुगुप्सन्ते स्म। ते शिष्यान् पुत्रवत् ज्ञातवन्तो विद्यादानेन तान् तोषयन्ति स्म च। विद्यार्थिनो गुरोर्गाः परिचारयन्तः पर्वतसमीपे नदीकक्षे वा प्रकृतिदृश्यहृतचित्ताः नैसर्गिकीं शान्तिमुपलब्धवन्तः। गुरुरपि

एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः।
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः॥'

इति विमर्शं चकार।

पुरा हि विद्वांसः न धनेन, किन्तु विद्यया सर्वत्र पूज्यन्ते स्म, यावद्राजा स्वराज्ये पूजित आसीत्। पुरा निर्धनोऽपि कश्चित् विद्यया पूजार्हो भवितुं समर्थं आसीत्। राजापि ईदृशस्य विदुष आगमनेनात्मानं बहु मन्यते स्म। ईदृशां शिष्याणां विद्याऽभ्युदयनिःश्रेयस-सिद्धयै आसीत्। गुरवोऽपि विद्यादानेनैव परमोत्कर्षलाभं मन्यन्ते स्म। तद्यथा—अध्यापनं ब्रह्मयज्ञः।

यावदेवास्माकं विद्या धनकरी भवति तावदेव नास्ति सम्भवः स्नेहसम्बन्धस्य। अध्यापका अपि धनोपार्जनाय न शिक्षाकार्यं स्वीकुर्वन्तु। आत्मकल्याणं देशकल्याणं धर्मप्रचारं ज्ञानप्रकाशनं भारतवर्षस्यार्यत्वरक्षां चेच्छन्तः पण्डिताः त्यागिनः शिक्षका भवन्तु। आधुनिकविश्वविद्यालयाः पाठशालाश्च प्रायशस्तादृशमादर्शं न भजन्ते। भारतस्य भारतीयता पौर्विकाचार्यपरम्परयैव संरक्षणीया यस्यां भारद्वाज-वशिष्ठ-शंकराचार्यादयः लोककल्याणा द्रष्टारः समभवन्।

शिष्यस्य चित्तं कथमपहृतं स्यादिति समाधानार्हः प्रश्नः। यत्किञ्चित् शिष्यस्याभीष्टतमं तदेवाधिगन्तुं स परमाभिलाषुको भवति। गुरु-समीपं शिष्यस्तु ज्ञानार्थमागच्छति। तद् ज्ञानं तु पुरा पावनमासीदध्यात्मपरत्वात्, प्रशान्तिमयत्वाच्च। स्वयमेवाध्यात्मपरायणः प्रशान्तो निष्कामश्चाचार्यः स्वस्मात् व्यक्तित्वादेकांशं शिष्याय प्रदत्तवान्। शिष्यस्तु गुरोः अंश एव गुरुमय अजायत। नासीत्तदा गुरुशिष्ययोर्भेदः। अस्यां स्थितौ तत्र का कथासीत् वित्तापहरणस्य। तथाहि—जीवक इति

विख्यातः तक्षशिला-विश्वविद्यालयस्यायुर्वेद-विद्यास्नातको यदा समावर्तनस्य पश्चात् निजगृहं पाटलिपुत्रे आगन्तुं प्रस्थितः तदा तस्य गुरुर्मार्गव्ययार्थं तस्मै सहस्र स्वर्णमुद्रा वितीर्य शिष्यादानृण्यमिव जगाम। स गुरुरद्यावधि गुरुगौरवं प्रतिष्ठापयति। अधुनापि प्राचीनादर्शप्रपन्नानां गुरुपादानां सर्वथा अभावो नास्तीति निःसंशयम्।

आधुनिकेषु शिक्षकेषु नातिन्यूनाः प्राचीनादर्शान् विस्मृत्य 'वेतनस्य हानिर्न भवेदिति' विद्यालयेषु उपस्थिता भवन्ति। न ते ज्ञानस्यादानप्रदाने सर्वोच्चकर्तव्यं मन्यन्ते। नास्ति तेषां स्वाभाविकी रुचिरध्यापनाय। किं न तेषां विषये व्यञ्जनया सत्यं भवति—

'बहवो गुरवो लोके शिष्यवित्तापहारकाः॥'



## २२. आचारः परमो धर्मः

अथ कोऽयमाचारो नाम? किमदः यदिदमाचर्यते, अथासौ येन वयं किञ्चिदाचरामः। किञ्चातः, यद्यसौ द्वितीयः तदा देहेन्द्रियादीनामन्येषां वा तादृशामाचारता प्रसज्येत। अङ्गीकुर्महे तर्हि प्रथममेव पक्षम्। अथाप्यविशेषेण सर्वस्याप्याचारता स्यादाचर्यमाणस्य। ननु स्यान्नाम कस्तावदेतावता दोषः? अयं दोषो यत् सर्वोऽपि क्रियमाणो धर्मः स्यात्। उच्यते किल 'आचारः प्रथमो धर्मः' इति। तर्ह्यस्तु सदाचार आचार इति, भीमसेनः सेनः, सत्यभामा भामेतिवत्। स्यान्नामेदम्। कथमिदमुच्यते धर्म' इति? यावता धर्ममूलताऽस्योच्यते स्मृतिभिर्मा- 'आचारो नवीयादिभिः:—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥"

बाढम्। परन्त्वयं विशेष, आचारस्य श्रुतिस्मृत्यादिभ्यः, यदयं स्वरूपेण धर्मतां भजति अनुकरणीयतारूपेण च धर्ममूलताम्। आचारः शीलमिति च पर्यायः। ननु कथमिदमुपपद्यते पूर्वोक्त एव हि श्लोके आचारशीले पृथग् गणयंस्तयोर्भिन्नतामिवाभिप्रैति तत्रभवान् मनुः। नायं दोषः, यत्किञ्चिदान्तरङ्गिकं भेदमूरीकृत्य तथा प्रतिपादनात्। यत्किञ्चिद्भेदस्य चाकिञ्चित्करत्वात्। अत एवाग्रे 'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः' इत्यादि वदन् मनुः शीलञ्चापरामृशन् तस्याचारेऽन्तर्भावं सूचयति। अत एव चैतं श्लोकमवतारयन् कुल्लूकभट्टः प्राह—'इदानीं

शीलस्याचार एवान्तर्भावसम्भवात्' इत्यादि । शङ्करभगवत्पादाश्चाहुः "चरणं, चारित्रं, आचारः, शीलमिति पर्यायः।" 'वेदो धर्ममूलम् । तद्विदाञ्च स्मृतिशीले' इत्यादि वदन्तो गौतमादयोऽपि आचारं शील एवान्तर्भावयन्त न पृथगेतं गृह्णन्ति। किमेवमत्यन्तमेवाऽभेदः शीलाचारयोः ? नेति वदामः । उक्तमेव किल प्राक् विद्यते कियांश्चित्तयोर्भेद इति । स च साधारणविशेषभावरूपः । आचारो हि द्विविधः मानसिकः कायिकश्चेति। मानसिक एवाचारो व्यवह्रियते शीलं स्वभावः, आत्मगुणा इत्यादिभिर्नामभिः । शारीरिकस्तु आचारनाम्नैव । इममेवाचारं शीलाख्यं त्रयोदशविधं निरूपयति हारीतः "ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता, मृदुता, अपारुष्यम्, मैं यम्, प्रियवादित्वम्, कृतज्ञता, शरण्यता, कारुण्यं, प्रशान्तिश्चेति" त्रयोदशविधं शीलमिति। प्रायेणैवं विधानेव गुणान् आत्मगुणान् वर्णयति गौतमः—"अथाष्टावात्मगुणाः। दया सर्वभूतेषु, क्षान्तिरनसूया, शौचमनायासो मङ्गलम—कार्पण्यमस्पृहेति।" बाह्यञ्चाचरणं स्नानध्यानगुरूपसदनादियद्धि आनिद्रात्यागाद् आ च पुनः सुप्तेर्विधेयतया प्रतिपाद्यते श्रुतिस्मृत्यादिभिः । तदिदमुच्यते शारीराचार इति। द्विविधोऽप्ययमेवाचारः क्रमाद् यमनियमाभिधानाभ्यामभिधीयते काशीखण्डादिषु—

"प्रथमं धर्मसर्वस्वं प्रोक्ता यन्नियमा यमाः।
अतस्तेष्वेव वै यत्नः कर्तव्यो धर्ममिच्छता ।।
सत्यं क्षमार्जवं ध्यानमानृशंस्यमहिंसनम्।
दमः प्रसादो माधुर्यं मृदुतेति यमा दश ।।"

एवमेव

"शौचं स्नानं तपो दानं मौनेज्याऽध्ययनं व्रतम्।
उपासनोपस्थदण्डो दशेति नियमाः स्मृताः॥"

तदेवं द्विविधोऽप्याचारो धर्मत्वाविशेषेऽपि भिद्यत एव धर्मान्तरात् कर्मरूपात् यागादेः। अत एव विशिनष्टीव भगवती श्रुतिः आचारं कर्मान्तरात्, ततः पृथगाचारं विनिर्दिशन्ती "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि, यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि" इति। सुचरितञ्च नामाऽत्राऽऽचार एव। "आचारः प्रथमो धर्मः" इति वदन् मनुरपि आचारस्य धर्मेष्वन्यतमतामेव प्रतिपादयति।

अमुमेवाचारं नितरां प्रशंसन्ति स्मृतयः सर्वश्रेष्ठताञ्च अस्य प्रतिपादयन्ति। यथाह मनुः

"आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः॥
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत्॥"

यथा चाह वशिष्ठः :

"आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः॥"

अन्योऽपि चास्ति कश्चिदाचारो यो हि विश्रुतः 'सामयिकाचार' इति यश्च भिद्यते भेदैः कालदेशीयानाम्। सामयिकाचारे चास्मिन्विनीतत्वं वहुश्रुतलक्षतयाभिवर्णयति गौतमः। यदाह भगवान् याज्ञवल्क्योऽपि—

"निजधर्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः॥"

तदेवमाचारस्योत्तमधर्मत्वमविगीतं प्रतिपाद्यते प्रायः सर्वैरपि शास्त्रकारैः।

अत्रैवं शङ्का समुदियात्, किं सर्वविधस्यापि आचारस्याविशेषत उत्तमता किमथवा किमपि तत्र तारतम्यमिति। नन्वविशेषेणैवोक्तम् 'आचारः परमो धर्मः' इति? वाढम्। परन्तु मानसिकाचारः कायिकाचारः इत्यादिना कृतो विभागः सूचयतीव किञ्चित् फलभेदं ततश्च किञ्चित्तारतम्यम्। सत्यमस्त्येव कश्चिद्भेदः। यतः अतिशेतेऽयं मनुजमात्रसाधारणः मानसिक आचारः शारीरिकमाचारव्रतं यत् किल भिद्येत वर्णाश्रमादिभेदात्। परिशुद्धस्यैव किल मनसः प्रवृत्तिविशेषो मानसिकाचारो नाम, यस्यैव च सम्पादनेच्छया प्रवर्तन्ते सर्वेऽप्याचारविशेषाः शारीरकादयः। एवं स्थिते को वा सन्देग्धि सम्पादयितुः सम्पत्सितस्य प्राधान्ये? अत एवाहाष्टविधात्मगुणप्रस्तावे तत्रभवान् गौतमः, "यस्यैते चत्वारिंशत् संस्कारा, न चाष्टावात्मगुणा, न स ब्रह्मणः सायुज्यं सालोक्यञ्च गच्छति। यस्य खलु संस्काराणामेकदेशोऽपि अष्टावात्मगुणा, अथ स ब्रह्मणः सायुज्यं सालोक्यञ्च गच्छति इति।" अध्यायसमाप्तिसूचनार्थोऽप्ययं गच्छति पदाभ्यासः द्रढयतीव आत्मगुणप्राधान्यम्। मनुरपि यमनियमयोरात्मगुणपक्षीयाणां यमानामेव प्राधान्यं स्पष्टयति

"ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता।
अहिंसास्तेयमाधुर्ये दमश्चेति यमाः स्मृताः।

स्नानं मौनोपवासेज्या स्वाध्यायोपस्थनिग्रहाः।
नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता:॥
यमान् सेवेत सततं न नित्यं नियमान् बुधः।
यमान् पतत्यकुर्वाणः नियमान् केवलान् भजन्॥"

एतादृश एव किलाचारे रुचिमुत्पादयितुं प्रवर्तन्ते सर्वाः श्रुतयः सर्वाणि च शास्त्राणि। इममेवाचारं सर्वप्रधानतया वर्णयत्याङ्गलेयानामियं सूक्तिः "यदि वित्तं नष्टं न किमपि नष्टम्, यदि स्वास्थ्यं नष्टं किञ्चिदिव नष्टम्, यदि पुनः सच्चरितं नष्टं सर्वस्वं विनष्टम्" इति। ऋते चास्मादान्तरङ्गिकादाचाराद्बाह्य सकलोऽप्याचारः केवलं विडम्बनायैव भवेत्। य एव बह्वधिक्षिप्यते नीलकण्ठदीक्षितादिभिः—

"कौपीनं भसितालेपः दर्भा रुद्राक्षमालिका।
मौनमेकासिका चेति मूर्खसञ्जीवनानि षट्॥"

इत्यादिना तदेवं प्राणप्रदोऽयमान्तरिक आचारः बाह्याचारस्य। तदभावे को नु वा श्रद्धालुर्भवेद् बाह्याचारे? अतः परस्परसहकृतोऽयं द्विविधः त्रिविधो वाचारः परमधर्म इत्यत्र न कापि विप्रतिपत्तिः। यतो धर्मो हि नाम धारको लोकस्य। अतश्च कृत्वाचिन्तया इदमुच्यते—विना यज्ञादिकर्माणि विनापि वा भगवति भक्तिं कदाचिदयं शक्नुयाल्लोको धारयितुम्, न पुनर्विना सदाचाराद्। जगत्प्रध्वंसाभावो हि अनुपदमनुसरति आचारात्यन्ताभावम्।

●

## २३. राष्ट्रिया संहतिः

विशालोऽयं देशोऽस्माकं भारतवर्षम्। निवासिनश्च विचित्रा, विविधजातीया, नैकभाषाभाषिणः। प्रांशुभिः पर्वतैः सुदीर्घाभिर्नदीभिर्विविधवर्णारञ्जितैर्वृक्षलतावनस्पतिभिः मरुस्थलीभिश्च संपूर्णाया पृथिव्याः प्रतिरूपभूतेयं भूमिरस्माकम्। अनादिकालादयं देशो मनुष्याणां निवासभूतः। अद्यापि भारतीयसभ्यतायाः प्रारम्भकालमधिकृत्य विवदन्ते विपश्चितः। विज्ञानविद्भिरुच्यते मनुष्या असभ्यदशातः क्रमशः सभ्यपदवीमधिरोहन्तीति। अस्माकमस्मिन् देशे कदा पुनरसभ्यदशायां जना आसन्नित्यस्य निश्चयो दुष्करः। सभ्यपदवीमधिरूढस्य मनुष्यस्य नैकाः कीर्तयोऽत्र उपलभ्यन्ते, या खलु विश्वस्य प्राचीनतमविषयाणामन्यतमाः। वेदाः, पुराणानि, शास्त्रग्रन्थाः, धर्मदर्शने, काव्यनाटकादयः कलाविद्याश्चास्मिन् भूखण्डेऽनादिकालादिवारभ्याद्यावधि महत्त्वं भजन्ते।

सुदीर्घेण कालेन महदुपकृतं भारतवर्षस्य। कालगत्या सार्धं मनुष्याणां चिन्तामार्गो यदि प्रसरति तदैव मानवानां भावाः कालजयिनो भवन्ति। महदिदं नः सौभाग्यं यदत्र भारतभूखण्डे तादृशाः सत्यद्रष्टारोऽजायन्त, यैः कालगतिर्नोपेक्षिता। अतश्च वेदेभ्यः प्रसृता भारतशिष्टपद्धतिः युगान्तरमतिक्रम्य चिरन्तनी संवृत्ता। देशमिमं देशनिवासिनश्च विशिष्टया भावसमृद्ध्या सम्मुद्रयेव भारतीया संस्कृतिरद्याप्यद्वितीया विराजते।

अद्वितीयत्वमस्या भारतसंस्कृतेः कुतः? संस्कृतिविद्भिः

प्रमाणितं वैचित्र्यस्यान्तरनुस्यूतं महदैक्यमेव भारतीयसंस्कृतेः प्राणधातुरिति। सत्यदर्शिभिः ऋषिभिरिदमेवैक्यं लक्ष्यीकृत्य सत्स्वपि देहभेदेषु देहिन ऐक्यमनुभूतम्। जीवात्मन एकत्वे सिद्धे जीवात्मपरमात्मनोरपि योगसूत्रं प्रकल्पितम्। परमेश्वरस्य रूपचिन्तायामपि एषैव ऐक्यभावना कारणमासीत्। अत एव मूलभूतं परमतत्त्वं न लिङ्गेन न वर्णेन न वा वहुत्वेन न वा जातिविशेषेणोपनिषत्कारैर्निर्दिष्टमपि तु—

'य एकोऽवर्णो वहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति।
विचैति चान्ते विश्वमादौ स देवः स नो बुद्धचा शुभया संयुनक्तु ।।'

इत्येतैः पदैर्निरूपितम्। एतादृशो न कस्यापि मनुष्यस्याननुमतो भवितुमर्हति। बौद्धो वा, जैनो वा, ख्रीष्टधर्मानुयायी वा, मुहम्मदीयो वा सर्व एव स्वस्वदेवं तादृशमेव मन्यन्ते। ईदृश्येव वुद्धिर्भारतीयानामृषीणां विशिष्टा।

एषैव बुद्धिरध्यात्मभूमाविव प्राकृतिकभूमावपि दृश्यते। धर्मानुष्ठानयोग्यदेशानां प्रकल्पन एषैव सर्वग्राहिणी बुद्धिः क्रमशः सम्पूर्णमेव भारतवर्षं धर्मानुष्ठानयोग्यत्वेन विषयीचकार। आदौ ब्रह्मावर्तः, ततो ब्रह्मर्षिदेशः तदनन्तरं मध्यदेशः अन्ते च सम्पूर्ण एव आर्यावर्तखण्डो मनुना धर्माचरणयोग्यः सम्मतः। दाक्षिणात्यदेशमपि भारतमनीषा नर्मदाकावेरीगोदावरीनदीभिः काञ्च्यादिनगरीभिश्च सम्बध्य दैशिकभेदे सत्यपि ऐक्यसूत्रेण आर्यावर्तेन समीचकार।

धर्माश्रितमैक्यवन्धनमिदं संस्कृतभाषा दृढीकृतवती। महर्षिभिरन्वाख्याता संस्कृतं नामैषा भाषा पूर्वदक्षिणपश्चिमोत्तरभागान् योगसूत्रेणाबध्नन्ती यथार्थतो देवभाषात्वमधिगतवती।

सार्वभौमोऽयं मानवधर्मः सर्वभूव्यापिनी चैषा संस्कृतभाषा भारतवर्षस्य महत्त्वसाधकं तत्त्वद्वयम्। येन धर्मेण यया च भाषया अस्मत्पूर्वजा देशमिमं महत्त्वचिह्नितं सौख्यसौभाग्य-परिपूर्णं सर्वतः समृद्धं च कृतवन्तः, स एव धर्मः सा चैव भाषा अधुनापि राष्ट्रियसंहतेः संस्थापनार्थमाश्रयणीयौ। नाऽयं धर्मो वर्णाश्रमो वा जैनो वा बौद्धो वा। केनचिदपि संकुचितेन विशेषणेन अपुरस्कर्तव्यो धर्मोऽयं वस्तुतो मानवधर्म एव। आदिपुरुषेण मनुना सार्वजनीनो यो धर्मो दृष्टः, स एव युगे युगे प्रतिसंस्कार-संस्कृतो मानवमात्रस्य कृते वरणीयोऽवलम्बनीयश्च।

महामतिना भारतप्रधानमन्त्रिणा नेहरूमहाशयेनापि तत्त्व-मिदमधिगतम्। उक्तं च तेन स्वकीये 'भारतम्—अद्यतनं श्वस्तनं च' इत्याख्ये भाषणे—"संस्कृतभाषया यत् प्राणभूतं कार्यं निर्वर्तितं न तत् लोके कयापि भाषया कस्या अपि मानव-जातेश्चरित्रे निर्वर्तितम्। न केवलमत्युदाराया मतेरति-श्लक्ष्णस्य साहित्यस्य च सा भाषा प्रकाशयित्री बभूव, किन्तु राजतन्त्रेण भिन्नस्यापि भारतदेशस्य सन्धानग्रन्थिर्बभूव। रामायणं महाभारतं च परस्सहस्राः समाः प्रतिसन्तति कोटिशो जनानां जीवने ओतप्रोते स्तः। मुहुरहं विस्मयेनैवं व्यतर्कयं यदि बुद्धादर्शः उपनिषदः, रामायणादिकं च अस्माभिर्विस्मर्यन्ते कीदृशी स्थितिः भवेदिति। सा निर्मूलिता भवेत्। यानि अस्या आधारभूतानि लक्षणानि एषु महत्सु युगपर्ययेषु, तामनवमुच्य सक्तानि, तस्याः प्रातिस्विकमुत्कर्षं च ददुः, तानि विनश्येयुः। न भारतो देशो भारतो भविष्यति।"

विश्वस्य प्रतिकोणं यदा आसन्नमहायुद्धघोषः समुदगच्छति,

यदा च धन्येऽस्मिन् भारतभूभागेऽपि भयावहा विभेदबुद्धिः प्रसारं लभते, तदैव तत्त्वस्यास्य सम्यगनुभवो विशेषतः प्रार्थनीयः। यदि च सर्वे जनाः स्वदेशस्य विशिष्टां भावनामुच्चैरुत्कर्षं तयोश्च सम्यङ्निर्वाहस्य मतिं स्वीकुर्युस्तर्हि देशोऽयमचिरादेव सर्वतः सम्पन्नो भवेत्।

संस्कृतेरेतादृशे महत्त्वे अद्वितीयत्वे च स्थितेऽपि भारतभूमेरद्यतनी दुर्गतिः सत्यमेव। स्वदेशप्रीतिः स्वजनवात्सल्यं चाधुना केवलं भाषणमात्रे श्रूयेते। स्वस्य लोभपूर्तये बहूनां मानवानां धनजीवितयोर्हानिमसकृत् कुर्वन्ति दुर्मेधसो जनाः। राष्ट्रियधनस्य एतादृशोऽपव्ययः कदापि नादृश्यत। स्वार्थपरता परां काष्ठां प्राप्ता। परार्थपरत्वं न कुत्रापि दृश्यते। मानवजीवनस्य किमपि महत्त्वं लोभपरायणैर्न स्वीक्रियते। कियन्ति नाम नदीबन्धनानि आमूलादुद्घाटितानि। तत्र चाधिकारिपुरुषाणां स्वार्थप्रणोदिता कर्त्तव्यावहेलना एव हेतुः। य एतत्कुर्वन्ति के ते? तेऽपि अस्मदीया एव भ्रातरः। भ्रातृत्वभावनाया दार्ढ्यमतो नितरामावश्यकम्।

एकदेशनिवासिनो वयं भारतीयाः। संस्कृतभाषा सामान्या अस्मासु। सर्वजनेषु सौभ्रात्रमस्माकं लक्ष्यम्। सर्वस्य जनस्य निस्तन्द्रसेवया भारतजनन्याः समृद्धिः साध्या। इमे विषयाः सर्वैः भारतीयैः आकुमारं हृदि संस्थाप्याः। अस्मिन् कर्मणि सर्वैश्च जनैः सन्नद्धैर्भवितव्यम्। एष एव पन्था राष्ट्रियसंहतेः, भारतमिदं यथानाम कर्तुम्। स देवः शुभया बुद्ध्या नः संयुनक्तु।

सा चेत् शुभबुद्धिरुदियात् तर्हि बहवो विघ्नाः समूलमुन्मूलिताः स्युः। लिपिभाषे अधिकृत्य ये विरोधाः प्रतिराज्य-

मुत्तरोत्तरं वर्धन्ते, यैश्च भारतस्यैक्यं विपन्नम्, निर्मलया देशहित-भावनया ते सर्वे सूर्योदये तिमिरसंघाता इव क्वापि विलेष्यन्ते। सर्वं वैचित्र्यं स्वीकृत्यैव प्राचीनभारतीया विद्वांसो महदैक्यं साधितवन्तः। अतश्च सूक्तिः "वसुधैव कुटुम्बकम्" इति। अधुनापि राष्ट्रान्तरेण सम्बन्धमधिकृत्य राष्ट्रसंघे विवादो जायते। अस्य च विवादस्य समाधानं प्राचीनभारते वैदिककाल एव कृतम्। अथर्ववेदे श्रूयते—

"जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्।"

इति। औदार्यस्य पराकाष्ठा वैदिकै ऋषिभिरत्र प्रदर्शिता। न केवलं स्वदेशमपि तु सम्पूर्णामेव पृथ्वीं वैदिकाः कवयो गृहमिव अमन्यन्त।

वाग्धर्मयोर्वैचित्र्यमत्र स्वीकृतं किन्तु तत्कृते परस्परविरोधः सौभ्रात्रकल्पनया तिरस्कृतः। उदारभावनैषा न केवलं भारतीयै-रपितु विश्वजनैः सादरं ग्राह्या। भारतस्य प्राचीनाया उदार-मतेरेवाश्रयेण सर्वे विरोधाः दूरीभविष्यन्ति स्वराष्ट्रस्य च सुदृढा संहतिः सम्पद्येत, राष्ट्रान्तरैश्च सद्भावो दृढीभविष्यति। नान्यः पन्था विद्यते अयनाय।



## २४. आचार्य-गौरवम्

वैदिकशिक्षणविधौ देवानां व्यक्तित्वानुरूपमाचार्यस्य व्यक्तित्वं प्रतिष्ठितम्। इन्द्राग्निसवितारो देवा आचार्या एव। एषां देवानां सर्वज्ञत्वं चेतनाप्रदानत्वं तमसोऽपाकरणं बुद्धिवर्धनं व्रतस्थापनं च वैदिकसाहित्ये प्रायशो निर्दिष्टानि। आत्मगुणैः तेषां देवानां समाना एवाचार्या अभवन्। आचार्यास्तु मन्त्र-द्रष्टारः कवयो बभूवुः। ते पुरुप्रिया आसन्। ऋग्वेदानुसारमेव—

'तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥'

प्रथमाचार्यः पितैवाभवत्। ऋषयस्तु गृहस्थाः स्वपुत्रान-पाठयन्। पुत्रैः सह बहवो ग्रामीणविद्यार्थिनोऽपि तत्रागत्य पठन्ति स्म। स ऋषिर्न केवलं स्वपुत्राणामपि तु सर्वेषां बालकानां पिता बभूव। इदमेव परिलक्ष्य धारणा समभवत्—

'आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः॥'

अनेन प्रकारेण मातृत्वमपि सिद्धमाचार्यस्य। स तु स्वयमेव ब्रह्मचारी बभूव। बहूनामाचार्याणां जीवनं तपोमयमभवत्।

आचार्यस्तु वेदाध्यापनं धनप्राप्तये नामन्यत। सूर्यो यथा प्रकाशं ददाति, नदी जलं ददाति तथैवाचार्यो विद्यार्थिभ्यो ज्ञानं ददाति स्म। कथितं च शतपथे आचार्यमधिकृत्य—'प्रिये स्वाध्याय-प्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान् साधयते सुखं स्वपिति।'

उपनिषत्सु बहूनामाचार्याणां व्यक्तित्वं निर्दाशितम्। पिप्पलादस्तु नाम्नैव तपस्वी प्रतिभाति। तस्य जीवनविधौ वैभवानां स्थानं नासीत्। सत्यनिष्ठ आसीत्स आचार्यः, यः शिष्यमशिक्षयत्—सत्यं वद, धर्मं चर। स्वाध्यायान्मा प्रमद। यान्यस्माकमनवद्यानि कर्माणि, तानि सेवितव्यानि, नो इतराणि। शिक्षा इमास्तेनाचार्येण निजव्यक्तित्वे प्रतिष्ठापिता इति निश्चितमेव। कश्चिदाचार्यो निजव्यक्तित्वस्य विश्लेषणमेव कुर्वन्नाह—

'आ मा यन्तु ब्रह्मचारिणः। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देवधारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। श्रुतं मे गोपाय। आवहन्ती। वितन्वाना। कुर्वाणाऽचीरमात्मनः। वासांसि मम गावश्च। अन्नपाने च सर्वदा।'

आचार्योऽकामयत—

यथापः प्रवता यान्ति। यथा मासा अहर्जरम्।
एवं मां ब्रह्मचारिणं। धातरायन्तु सर्वतः।
प्रतिवेशोऽसि प्र मा भाहि। मा पद्यस्व।

शिष्याचार्ययोर्दृढैकत्वं समुपस्थापितमनेन वाक्येन—

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु।

रामायणमहाभारतादिषु तत्कालीनप्रख्याताचार्याणां भरद्वाजागस्त्यवसिष्ठवाल्मीकिव्यासद्रोणपरशुरामादीनां व्यक्तित्वं तु विदितं सर्वेषाम्। अगस्त्यमधिकृत्य रामायणे निगदितम्—

'अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा।
दक्षिणा दिक् कृता येन शरण्या पुण्यकर्मणा।।
ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत्।
औदार्येणावगच्छामि निधानं तपसामिमम्।।'

रामोऽपि आचार्यमहर्षीणां दर्शनेनात्मानं वहु मन्यते स्म।

सूत्रस्मृतिपरम्परानुसारमाचार्यस्य व्यक्तित्वं पूर्ववदुच्चतरं दृश्यते। आचार्यस्तु शिष्याणामध्यापनायात्यधिकं श्रमं करोति स्म। तस्य जीवनविधिर्ब्रह्मचर्यनिष्ठः सन् विद्यार्थिनामादर्श-आसीत्। स स्वशरीरं नालङ्कृतं भूषितं वा कृतवान्। स्वय-मप्यर्धरात्रत उत्थाय स्वाध्यायमकरोत्। ब्राह्ममुहूर्त्ते सोऽध्यापनं कृतवान्। पश्चादपि नाशेत। सोऽधमपुरुषैः सह सम्बन्धं ना-करोत्। व्यर्थकार्याणि तृणभंजनादीनि नाकरोत्।

परवर्तियुगीनाचार्याणां वर्णनं रघुवंशे कादम्बर्यां च दृश्यते। जावालिवसिष्ठादीनामादर्शाः तत्कालीनर्षीणां समक्षमविद्यन्त।

ख्रीष्टस्य पश्चादष्टमे शतके शङ्कराचार्यस्य प्रादुर्भाव उल्लेखनीयः। शङ्करस्य प्रतिभाऽप्रतिमासीत्। अष्टमे वर्षे एव स वेदादिषु परमप्रावीण्यं प्राप्तवान्। बाल्य एव स प्रव्रजितः। ततः परं जीवनपर्यन्तं स कर्मयोगी बभूव। अद्वैतवेदान्तस्य प्रकाशस्तम्भरूपा महामठा भारतस्य चतसृषु दिक्षु तेन प्रतिष्ठा-पिताः। तस्य दिग्विजयः सुविदित एव। तस्य शास्त्रविवादा दर्शनग्रन्थानां भाष्याणि च प्रख्यातानि।

वौद्धाचार्याणां व्यक्तित्वं बुद्धस्य व्यक्तित्वानुरूपमेव दृश्यते। गौतमेऽदम्य उत्साहः, प्रातिस्विकी कर्मण्यता, आर्जवम्, प्रत्यु-त्पन्नवुद्धिः, शङ्कासमाधानस्यातिशयक्षमता चावर्तन्त। राज-

कुमार आसीत् बुद्धः। तस्य सम्पर्केण सर्वे प्रभाविताः सन्तो विचारयितुमारब्धवन्तः—कीदृशमिदं ज्ञानं येन गौतमस्येदृश्युच्चता भव्यता वा ?

मानवतां प्रति गौतमस्यापरिमेया सहानुभूतिरासीत् । स सार्वजनीनहितायाऽसंख्यान् शिष्यान् देशेषु विदेशेषु च प्रेषितवान् तानादिशच्च—'विश्वस्य सर्वेभ्यः प्राणिभ्यो दयाभावं धारयत। सर्वेषां कल्याणाय, लाभाय, मङ्गलाय च चेष्टध्वम्। तदेव जीवनदर्शनं विज्ञापयत यदादौ मध्येऽवसाने च कल्याणमयं वर्तते ।'

गौतमस्य वाणी मधुरासीत्। धीर एव विकारहेतौ सति स चित्तविक्रियां नान्वभवत्। शत्रवोऽपि सस्नेहं व्यवहृताः तं शरणं ययुः। इत्थं भूतेऽपि तस्यानुशासनमतिसफलमासीत्।

परवर्तियुगेऽपि बहवो बौद्धाचार्याः स्वयुगेषु चरित्रज्ञानयशोबलेन च सर्वत्र प्रतिष्ठिताः। तेषां व्यक्तित्वप्रभयैवाकृष्टा विद्वांसो ज्ञानपिपासवो विदेशेभ्योऽपि समागताः।

जैनाचार्याणां व्यक्तित्वं महावीरस्य व्यक्तित्वानुरूपं विकसितम्। सर्वेषां हिताय ते प्रयत्नशीला बभूवुः। सरलजीवनं तैः स्वीकृतम् । उपाध्यायाः सम्यग्ज्ञानदर्शनचरित्रैः समायुक्ता आसन् । आचार्याः समाजं दर्शनज्ञानवीर्यचरित्रतपोभिश्च सन्धारयितुं नियुक्ताः।

उपरि वक्तव्येन स्पष्टं वर्तते यत् प्राचीना आचार्याः स्वकीयैः लोकप्रियङ्करगुणैः, तपोभिः, त्यागैः, ज्ञाननिधिभिः शिष्याणां कल्याणस्य परमकामनाभिश्च गौरवास्पदमासन्। सम्प्रति स्वल्पा एवाचार्याः प्राचीनादर्शान् परिपालयन्ति। फलत आचार्य-

पदमधुना तावन्मात्रं गौरवास्पदं नास्ति, यावन्मात्रं पूर्वमासीत्। अस्यां स्थितौ क्वचिद् विद्यार्थिनामविनयः, तेषां संस्कृतेरभावात्, विद्यानां हीनगुणत्वाद्वा सुव्यक्तमेव। कुतस्तेषां मानसे आचार्य-गौरवं प्रतिष्ठाप्येत ?



## २५. कर्मयोगः

संन्यासिनस्तु कर्माणि परित्यज्य योगेनाध्यात्मिकमानन्दं प्राप्तुं प्रयतेरन्। इदमेव संन्यासस्य सर्वोच्चप्रगमनम्। अस्यां स्थितौ संन्यासिनां सामाजिकजीवनस्य कर्मक्षेत्रे न भवेत् कोऽपि सम्बन्धः। कर्म केन हेतुना त्याज्यम्? कर्मणः फलानि भोक्तुं संसारे जन्मग्रहणमवश्यम्भावीति कर्मणः बन्धनस्वभावो विज्ञातः। अतएव कर्माणि परिहर्तव्यानि। कर्मणोऽकरणे मुक्तिर्भवति सुनिश्चितम्। कर्मणः परित्यागेन मुक्तिलाभस्य योजना जैनैर्बौद्धैरपि स्वीकृता।

उपर्युक्तकर्मसंन्यासस्यायोजनेन सह कर्मयोगस्य सिद्धान्तोऽपि पुरातनएव। कर्मफलाशां परित्यज्य यत् कर्म क्रियते, तन्न बन्धनाय भवति। मोक्षस्य साधनमेव तद् भवति। जनककृष्णवसिष्ठव्यासादयः कर्मयोगिनः सन्ति। स्वयं संन्यासी भूत्वाऽपि शङ्करो यावज्जीवनमनवरतश्रमेण भारतस्याभ्युदयाय यतते स्म।

कर्मयोगस्य सिद्धान्तः प्रथममेव गीतायां सुविविक्तो वर्तते। गीतानुसारं तु—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात्कर्मयोगी विशिष्यते॥

यथा संन्यासिने जीवनपर्यन्तं कर्मव्यापारस्यावश्यकता न वर्तते, तथैव कर्मयोगिनेऽपि जीवनपर्यन्तं कर्मणो विरमणं नापेक्षितम्।

साधारणपुरुषाः कर्मयोगस्याधिकारिणो न सन्ति। त एव

कर्मयोगिनो भवितुं समर्था ये योगयुक्ता विशुद्धात्मानो विजितात्मानो जितेन्द्रियाः सर्वभूतात्मभूतात्मानश्च सन्ति। ईदृशानां पुरुषाणां कर्मकरणमपि नैष्कर्म्यमेव। न ते किञ्चिदपि कुर्वन्ति। यथा गीतायां प्रतिपादितम्—

'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः॥
नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥'

कर्मयोगिनो बुद्धिर्गीतायां विविक्ता—

'प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति॥
मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते॥'

भगवद्भक्तोऽपि भवति कर्मयोगी। तद्यथा—

'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥'

कर्मयोगी तानि सर्वाणि कर्माणि न करोति, यानि कश्चित् साधारणपुरुषोऽपि करोति। निःसन्देहं तस्य शाश्वतकर्माणि—यज्ञदानतपांसि भवन्ति। एभिस्तस्य चित्तशुद्धिर्भवति। वर्णधर्मानुरूपं तस्य कार्याणि भवन्ति। कर्मयोगिने कर्म भगवदर्चनस्य सामग्री भवति। स एव महादेवोऽर्चनीयो यस्मात् सर्वेषां प्राणिनां प्रवृत्तिर्जायते, येन सर्वमिदं ततम्। इदमेव कर्मणो

याज्ञिकस्वरूपम् । इदमेव मानवस्य सफलताया वास्तविकं रहस्यम् ।

गीतानुसारं मानवलोकोऽयं कर्मभूमिः । नात्र कर्मणः पूर्णरूपेण त्यागः सम्भाव्यः । कर्मसंन्यासिनोऽपि कर्मणः सर्वथा न मुक्ताः । कर्मसंन्यासिकर्मयोगिनोरन्तरमियन्मात्रमेव भवति यत् संन्यासी स्वल्पतमं कर्म करोति; कर्मयोगी चाधिकाधिकं कर्म कुर्वन् लोककल्याणं विदधाति । कृष्णस्तु स्वकीयां कर्मयोगप्रवृत्तिं निदर्शयन्नाह—

'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।

लोकसंग्रहणाय कर्मप्रवृत्तिर्नितरामपेक्षिता । लोकस्य रक्षणाय कर्मयोगी तादृशमेव प्रवर्तते यथेश्वरो लोकरक्षणाय कार्यपरः । ईश्वरादर्शानुरूपं हि समाजे सुव्यवस्थास्थापनं शान्तिविधानं चरित्रनिर्माणं च कर्मयोगिनां कर्तव्यानि । कर्मयोगी समाजस्यादर्शनेता भवति । आत्मज्ञानेन यो जीवनपथः कर्मयोगिना प्रकाश्यते, तस्यानुसरणं समाजः करोति ।

गीतायां कर्मयोगः संन्यासयोगो भक्तियोगश्च प्रतिष्ठिताः । एषु कर्मयोगः श्रेष्ठः । भक्तियोगेन संन्यासयोगेन च व्यक्तित्वस्य विकासं कृत्वापि निष्कामभावेन कर्मकरणमेवादर्शपथः । भारतीयसंस्कृतौ पदे पदे देवानां चरितमादर्शरूपेण प्रतिष्ठितम् । देवानामादर्शानुकूलो वर्तते कर्मयोगः । देवाः सदैव कर्माभिरताः स्वकीयं मानवीयं च कल्याणं कृतवन्तः ।

कृष्णेन कर्मयोगस्य वैशिष्ट्यं परिलक्ष्य गीतायां प्रतिपादितम्-

'तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।

कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन !'

## २६. मोक्षः

'मनो नाम महाव्याघ्रो विषयारण्यभूमिषु।
चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः।।'

न्यायदर्शनानुसारं दुःखस्यात्यन्तविमोक्ष एवापवर्गः। दुःखानां भोगाय शरीरमपेक्ष्यते। स्वकृतपापपुण्यादीनां कर्मणां फलभोगायात्मनः शरीरेण सम्बन्धो जायते। तादृशानां कर्मणामभावे पुनर्जन्म न विद्यते। इयमेवात्मनो मुक्तावस्था। तदात्माऽनुभवविहीनो भवति। मुक्तात्मनः शाश्वतानन्द आध्यात्मिक एव। शरीरवतामात्मनामानन्द आधिभौतिको भवति।

मुक्तये ज्ञानमेवापेक्षितम्। ज्ञेयविषयास्तु—प्रमाणप्रमेयादयः। तत्त्वज्ञानानन्तरं मिथ्याज्ञानं विनश्यति। ततो रागद्वेषौ नश्यतः। ततो धर्माधर्मप्रवृत्तयो नश्यन्ति। परिणामस्वरूपं जन्मासम्भवं भवति। तदा न सन्ति दुःखानि। दुःखानामत्यन्ताभावो मोक्षः। वैशेषिकेऽपि द्रव्यगुणादीनां पदार्थानां तत्त्वज्ञानात् निःश्रेयससिद्धिर्निर्णीता।

सांख्यानुसारं पुरुषस्य बन्धनं मोक्षो वा वस्तुतो न भवति। तथा हि—

'तस्मान्न वध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।
संसरति वध्यते मुच्यते च नानाश्रया प्रकृतिः।।
रूपैः सप्तभिरेवं वध्नात्यात्मानमात्मना प्रकृतिः।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण।।

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥

अनेन प्रकारेण जीवनकालेऽपि मुक्तिः प्राप्यते। मरणानन्तरं तु जीवन्मुक्तः कैवल्यं (पूर्णमोक्षम्) अश्नुते।

योगदर्शनानुसारं सम्यग्दर्शनेन प्रकृतिपाशेभ्यः पुरुषस्य मुक्तिः सम्भवति। प्रकृतेः चित्ततत्त्वं पुरुषं बध्नाति। चित्तवृत्तेर्निरोधायाष्टाङ्गिको योगमार्गः प्रतिष्ठितः। यावत्कालं चित्तं कार्यपरं भवति, तावदेव पुरुषः संसारी भवति। अन्यथा पुरुषाय संसारस्यास्तित्वमपि न विद्यते।

समाधिसम्पन्नो योगी कर्मक्षयमारभते। त्रिविधानि कर्माणि—प्रारब्धानि, संचितानि, आगामीनि च भवन्ति। ईश्वरभक्त्या समाजसेवया चागामिकर्मभ्यो निवृत्तिर्भवति। मुक्तिमार्गे कर्माण्येव बन्धनानि।

मीमांसायां प्रारम्भिकयुगे मुक्तेः कल्पना स्पष्टा नासीत्। तदा यज्ञादिभिः स्वर्गगतिरेव सर्वोच्चा निर्णीता। परवर्तियुगे प्रभाकरो धर्माधर्मविरहितस्यात्मनो मोक्षगतिं निर्दिष्टवान्। तत्रापि मोक्षाय शमदमब्रह्मचर्यादिनाऽऽत्मज्ञानप्राप्तिरेव साधनं सम्मतम्। मीमांसानुसारं मोक्षावस्थायामात्मा शुद्धरूपे वर्त्तमानो निर्द्वन्द्वो भवति।

वेदान्तदर्शनानुसारं ब्रह्मनिष्ठो मोक्षं लभते। तद्यथा जीवन्मुक्ता विदेहमुक्ताश्च ब्रह्मनिष्ठा भवन्ति। यदा जीवनकाले व्यावहारिकदृष्टिः न वर्तते, तर्हि जीवन्मुक्तस्य दृष्टिः पारमार्थिकी भवति। मोक्षावस्थायामात्मा पारमार्थिकः, कूटस्थो नित्यः, आकाशवत् सर्वव्यापी सर्वविक्रियारहितो नित्यतृप्तो निरवयवः

स्वयंज्योतिस्वभावो भवति। जीवन्मुक्तः सर्वं ब्रह्मवत्पश्यति। मुक्तः सन्नात्मा ब्रह्मणः तादात्म्यं लभते।

रामानुजाचार्यस्य विशिष्टाद्वैते भक्तिः मुक्तये प्रधानसाधनं सम्मता। ते एव भक्ता भवितुमर्हन्ति, ये निष्कामकर्मयोगेन हृदयस्य परिशोधनं कृत्वा भगवतोऽन्तर्यामिस्वरूपं जानन्ति। भक्तेः सम्पूर्णतैव मुक्तिः। तद्यथा भक्तेः चरमसोपानं प्रपत्तिः। प्रपत्तिस्तु भगवति विलीनत्वमेव। आत्मनः स्वतन्त्रसत्ता मुक्तावस्थायामपि वर्तते। मुक्तात्मा सर्वज्ञः सन् सदैवेश्वरा-नुभूतिं करोति। मुक्तात्माऽणुरूपो भवति। ब्रह्म तु सर्वव्यापि विभु चास्ति। एतदेव तयोरन्तरम्। सृष्टिव्यापारे मुक्तात्मन उत्तरदायित्वं नास्ति।

ब्रह्मलोकेऽसंख्या मुक्तात्मानो विद्यन्ते। ते विशुद्धसत्त्व-मयाः। सत्त्वैरेव ते निजविचारस्येच्छायाश्च स्वरूपं विदधति। भक्तिमार्गेण मुक्ता आत्मानो भक्तौ रताः भवन्ति। ध्यानो-पासनादिभिर्मुक्ता आत्मान ऐकान्तिकाः केवलिनो भवन्ति।

यदा जीवो नवतत्त्वानि प्रति श्रद्धां लभते, तदा सम्यग्ज्ञान-प्रक्रियाऽऽरभते इति जैनशास्त्रेषु प्रतिपादितम्। सम्यग्ज्ञानेन जीवस्य संशयविमोहविभ्रमाणां क्षयो भवति। तदा चारित्रेणा-शुभाद्विनिवृत्तिः शुभे प्रवृत्तिर्जायते। व्रतसमितिगुप्तय एव चारित्राणि। सम्यक्चारित्रेण कर्मबन्धनं प्रहीयते, कर्मणोऽव-रोधश्च भवति। अयमेव मोक्षः। तथा हि—

'सम्यग्दर्शनं ज्ञानं चरणं मोक्षस्य कारणं जानीहि।
व्यवहारात् निश्चयतः तत्त्रितयमयो निज आत्मा॥

मा मुह्यत मा रज्यत मा द्विष्यतेष्टानिष्टार्थेषु।
स्थिरमिच्छथ यदि चित्तं विचित्रध्यानप्रसिद्ध्यै॥'
आत्माऽऽत्मनि रत इदमेव परं भवति ध्यानम्।

जैनदर्शनानुसारं मुक्तात्मा 'ईश्वरः' इति कथ्यते।

बौद्धदर्शने निर्वाणं वैदिकदर्शनस्य मोक्षस्थानीयं वर्तते। निर्वाणं तु परमः क्षेमः, तृष्णाक्षयः दुःखस्यान्तः, मृत्योर्जय एव च वर्तते। यथाऽग्निर्निर्वापितः सन्नदृश्यो भवति तथैव निर्वाणं प्राप्य पुरुषस्य किंचिदपि कुत्रापि न वर्ततेऽस्तित्वम्।

रागस्य प्रहारेण निर्वाणं प्राप्यते। तदा कामसुखानि न विद्यन्ते। निर्वाणपथगामिनां कृते चत्वारि 'आर्यसत्यानि' प्रतिष्ठितानि। तद्यथा—दुःखम्, दुःखस्य समुदयः, दुःखस्य निरोधः, निरोधायाष्टाङ्गिकमार्गश्च। अष्टाङ्गिकमार्गो दृष्टि-संकल्पवाक्कर्मान्ताजीविकाव्यायामस्मृतिसमाधीनां सम्यक् प्रति-ष्ठैव भवति। समाधिर्योगपरो भवति।

निर्वाणं द्विविधं मतम्—सोपधिशेषं निरुपधिशेषं च। तयोः प्रथमं जीवन्मुक्तस्यावस्था भवति, अपरं च मरणानन्तरमेव जायते। परवर्तियुगेप्रतिष्ठितं निर्वाणमभिनवकोटिकमेव निर्धा-रितम्। तदनुसारं बोधिसत्त्वा महाकरुणया प्रेरिताः सन्तः शून्यतां न प्रतिपद्यन्ते, यद्यपि ते सर्वथा योग्या भवन्ति।

सर्वेषु धर्मेषु दर्शनेषु वा भारतीयविमर्शानुसारमेव परमं सत्यं मोक्षमधिकृत्य वर्तते, तत्तु परिग्रह एव संस्कृतिमोक्षयोर-न्तरमिति। 'परग्रहस्तु न केवलं शरीरतो मनसोऽपि हेयः' इति मोक्षसाधनम्।

## २७. कविर्मनीषी

'जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वाः।
नास्ति येषां यशःकाये जरा मरणजं भयम्॥
वन्द्यः कोऽपि सुधास्यन्दास्कन्दी स सुकवेर्गुणः।
येन याति यशःकायः स्थैर्यं स्वय परस्य च।

वैदिककवय ऋषय इति ख्याताः। साधारणतः ते ऋषयो भरद्वाजात्रिवसिष्ठवामदेवकण्वादयो ज्ञानविज्ञानतपोभिः परिपूता बभूवुरिति तेषां रचनाभिरपि स्पष्टं प्रतिभाति। कवेः प्रतिभा ब्रह्म इति प्रसिद्धा देवैः प्रदत्ता सम्मता। तस्याः प्रसूतिः ऋतस्य सदनाद् बभूवेति धारणाऽऽसीत्। हृदयमेव काव्यस्याधिष्ठानं व्याख्यातम्। सोमपानेन तेषामृषीणां काव्यरचनाशक्तिः समुत्तेजिता बभूव।

वैदिकयुगे राजानः, सैनिकाः, वैश्याः, आर्येतराः, स्त्रियो वा कवयो बभूवुः। तत्र राजानो युद्धभूमेः स्वकीयमनुभवं निवेदितवन्तः। तथा हि राजा ऋषभः—

'अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः।
अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः॥'

'योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम्।
अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव॥'

कश्चिद्वीरसैनिकः प्रवदति—'धन्वना सर्वाः प्रदिशो जयेम।'

रामायणमहाभारतयोः रचयितारौ वाल्मीकिः व्यासश्च श्रेष्ठमहर्षी बभूवतुः। तपोभिरेव तयोः कवित्वं प्रस्फुटितमिति

प्रतिभाति। आचार्यस्य व्यासस्य दर्शन-राजनीति-युद्धशास्त्रादेः ज्ञानं विपुलमासीत्। वाल्मीकेः काव्यरचना दिव्या भव्या च दैवानुग्रहैः बभूव। काव्यादर्शस्य वृत्तिमनुवर्त्तमाना ऋषयोऽपि शृङ्गारवीरादिरसात्मकानि काव्याङ्गानि उपर्वाणितवन्तः।

परर्वातियुगे कवयो राजाश्रयं प्राप्तवन्तः। प्रथमं तावदश्वघोषो बौद्धसंस्कृतेर्महानुन्नायकः कनिष्कस्य राजसभामलंकृतवानिति श्रूयते। तथाऽपि अश्वघोषस्य रचनायां क्वचिदपि राज्ञां रुचेरनुवर्तनं न दृश्यते। तस्य काव्यप्रणयनोत्साह ऋषिवदासीत्।

परर्वातियुगीना राजानः कवयश्च परस्परं श्रद्दधाना दृश्यन्ते। तथा हि वासुदेवः, सातवाहनः, शूद्रकः, साहसाङ्कः, विक्रमादित्यः, भोजश्च तादृशाः प्रमुखा राजानः। कालिदासः, मेण्ठः, अमरः, भारविश्च उज्जयिन्यां राजसभाश्रयं प्राप्तवन्तः। बाणो हर्षवर्धनस्य राजसभामलंकृतवान्। वाक्पतिराजः, राजशेखरः, श्रीहर्षश्च राजसभाश्रयं प्राप्तवन्तः। राजसभायां काव्यस्य समुन्नतेः सुयोगोऽविद्यत। परस्परस्पर्धया नित्यमेवोच्चतरकाव्यस्य रचना समभवत्। कतिपये राजानः श्रेष्ठकवयो बभूवुः।

राजाश्रयं प्राप्यापि स्वल्पा एव कवयो राजप्रशस्ति कृतवन्तः। कविप्रतिभा राजधान्यामपि कुण्ठिता न बभूव। किन्तु श्रृङ्गाररसस्य वीररसस्य च प्राधान्यं राजकवीनां रचनासु स्वाभाविकमेवासीत्। ख्रीष्टतः प्राक् काव्यस्य प्रणयनं प्रायः चतुर्वर्गाणाम्—विशेषतो धर्ममोक्षयोः व्याख्यानाय बभूव। ख्रीष्टस्य पश्चात् काव्यरचना नागरिकाणां मनोरञ्जनेन सह तेषां चित्तवृत्तिसंस्काराय बभूव।

'प्रतिभाशालिन एव विद्वांसः कविपद्धतिमनुसरन्तु' इति प्रथितं समालोचकेन विदग्धेन--

'विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः।'

तया प्रतिभया सर्वविद्याधरत्वं समायाति। तथा हि--

'कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि।
यत्र हंसवयांसीव भुवनानि चतुर्दश॥

प्रतिभया सह व्युत्पत्तेः अभ्यासस्य च सामञ्जस्यमपेक्षितमभिमतम्। तत्र शास्त्रकवयः, काव्यकवयः, उभयकवयश्च सम्मताः। उभयकवयः श्रेष्ठाः समादृताः। 'सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति' इति राजशेखरः।

राजशेखरः 'कवित्वस्य अष्टौ मातरः' इति प्रतिपादयति--

'स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता।
स्मृतिदाढ्यर्यनिर्वेदश्च मातरोऽष्टौ कवित्वस्य॥

कविचर्यां निदर्शयन् स उपवर्णयति--'स्मितपूर्वमभिभाषणम्, रहस्यान्वेषणं परकाव्यदूषणवैमुख्यमनभिहितस्य'। तदनुसारं कविगृहं तु रमणीयमासीत्। तथा हि--तस्य भवनं सुसंमृष्टम्, ऋतुषट्कोचितविविधस्थानम्, अनेकतरुमूलकल्पितापाश्रयवृक्षवाटिकम्, सक्रीडापर्वतकम्, सदीर्घिकापुष्करिणीकम्, सबर्हिणहरिणाहारीतम्, ससारसचक्रवाकहंसम्, सभूमिधारागृहयन्त्रलतामण्डपकम्, सदोलाप्रेङ्खं च स्यात्।

कवेर्व्यक्तित्वस्य विकासः कीदृशः स्यात् इति क्षेमेन्द्रेण साधु वर्णितम्। तथाहि--

'सहवासः कविवरैर्महाकाव्यार्थचर्वणम्।
आर्यत्वं सुजनैर्मैत्री सौमनस्यं सुवेषता॥

नाटकाभिनयप्रेक्षा शृङ्गारालिंगिता मतिः।
कवीनां सम्भवे दानं गीतेनात्माधिवासनम् ॥
लोकाचारपरिज्ञानं विविक्ताख्यायिकारसः।
इतिहासानुसरणं चारुचित्रनिरीक्षणम् ॥
शिल्पिनां कौशलप्रेक्षा वीरयुद्धावलोकनम्।
शोकप्रलापश्रवणं श्मशानारण्यदर्शनम् ॥
व्रतिनां पर्युपासा च नीडायतनसेवनम्।
मधुरस्निग्धमशनं धातुसाम्यमशोकता ॥
आलोकः पत्रलेख्यादौ गोष्ठी-प्रहसनज्ञता।
प्रेक्षा प्राणिस्वभावानां समुद्राद्रिस्थितीक्षणम्।
रवीन्दुताराकलनं सर्वर्तुपरिभावनम्।
जनसंघाभिगमनं देशभाषोपजीवनम् ॥
आधानोद्धरणे प्रज्ञा कृतसंशोधनं मुहुः।
अपराधीनता यज्ञसभाविद्यागृहस्थितिः ॥'

क्षेमेन्द्रः कवेरतिशयार्थं व्यनक्ति—

'सुकविरतिशयार्थी वाक्चमत्कारलोभाद्—
अभिसरतिमनोज्ञे वस्तु-शब्दार्थ-सार्थे।
भ्रमर इव वसन्ते पुष्तकान्ते वनान्ते।
नवकुसमविशेषामोदमास्वादलोलः ॥'

एतादृशां कवीनां कृतेः प्रशस्तिर्गीता भर्तृहरिणा—

'किमु धनैर्विद्याऽनवद्या यदि
सुकविता यद्यस्ति राज्येन किम् ?'

## २८. सुरगवी

विरलजनसंचारेऽस्मिन् शून्यसारस्वते मन्दिरे सुरभारती-समाराधनाय सम्प्रवृत्ताध्ययनाध्वरे प्रज्वलिते दारिद्र्याग्नौ आत्मानं हविरिव जुह्वतः केचन सन्ति सुरभारतीप्रणयिनः पुरुषा दीनाः नितान्तपरमुखापेक्षिणः। नवलब्धस्वातन्त्र्येऽस्मिन् भारते वर्षे, अपगते सहस्राधिकाब्दव्यापके पारतन्त्र्ये घोरान्धकारे, पूर्वाशारुणोदयालोकनेन विकचहृदयकमले जने, यदि नामेयम-वसीदति सुरगवी जनगणमनोवैमुख्येन, तर्हि को लाभोऽस्माकं तेन स्वातन्त्र्येण? सुरभारतीकाव्यकाननमद्यमरुप्रायं संवृत्तम्। न तत्र भासो हंसः, कविकुलगुरुः कालिदासो मयूरो मधुरं रौति। भारतीतन्त्रीस्वनसम्मिश्राः सुमधुरकविताझंकृतयो न प्रसरन्ति। काव्यसौरभसमाकृष्टा रसिकजनमनोभृङ्गा न ,च प्रधावन्ति। हताशनिःश्वाससुदीर्घवायवो रजांसि आदाय इवेहाक्रीडन्ति यथा श्मशानानिलाः।

किं च येयं सुदूरेऽतीते, अस्मत्पूर्वतनैराचार्यैरस्मिन्नेव भारत-भूमण्डले एकाऽध्यात्मविद्याप्रदीपकलिका प्रज्वालिता, उन्नमय्य च धारितासीद् विश्वेषां जनानामात्मसन्दृशेः विदूरीकरणार्थं चाज्ञानान्धतमसानाम्। मध्ये या चानेकैराचार्यैः सुरगवीस्नेहेन संवर्धिताऽभूत्। सेयं भारतीयाध्यात्मविद्याप्रदीपशिखा अद्य नितरां क्षीणाभा संप्रवृत्ता, नातिदूरं वितरति स्वकीयं प्रभामण्डलम्, समन्तात्प्रसरति, अज्ञानान्धतमसं समाच्छादयतीव भारत-भूमण्डलम्। तस्मिन् निशीथनीरन्ध्राज्ञानान्धे तमसि वर्तमाना-

नामस्मिन् भारतभूवलये सञ्चारं कुर्वाणानां पथि अपथे वा पदं निदधतामन्योन्यस्वरूपमविजानतां निरन्तरपारस्परिकसंघर्षमवाप्नुवतामस्माकं चेतांसि सुदृढं खेदमुपगतानि। स्वत एवेयमुक्तिः कण्ठान्निःसरति—

"हा हा देवि! स्खलति हृदयं स्रंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि॥

एतादृशी महती विनष्टिः समापतिता। जागर्ति मनस्विनां हृदि जिज्ञासा—कोऽत्र प्रतीकारस्य पन्था इति। 'उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत। क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्तीति।' नैतावदुपदेशमात्रं प्रतीकारः। अप्रतीकारदशायां वर्तते सुरगवी। यावद् गृहीतशासनदण्डपाणिभिर्भारते वर्षे न प्रचार्यते सुरगवी, तावत् काऽऽशा प्रतीकारस्य? यावन्न पाय्येरन् भारताभिजनाः सुरगवीपयः, तावत् कथमिव ते स्युः सुरगवीपयः पानाहितपुष्टय आत्मानमुद्धर्तुमीशाः? सुरगवीप्रचारमन्तरेण संस्कृतिरूपस्य सुरगवीपयसः पानमन्तरेण च नास्त्येव प्रतीकारस्याशा।

सेयं सुरगवीप्रचारणधूर्योग्यतयाऽधिरूढा संस्कृतविद्वत्सु। मोहनिद्रामवधूय प्रबुद्धा विद्वन्मण्डली। सम्प्रति दिशि दिशि सुरगवी-प्रचारपत्रिका दृश्यते, यस्याः पत्रपुटे दुग्ध्वा वयं सुरगवीपयः संस्कृतिरूपं जननिवहसुखस्याग्रत प्रापयिष्याम इति बलवती आशा जायते। परं यदि न रोचते जनेभ्यः सुरगवीपयः, यदि जना अवज्ञया मुखं परावर्तयेयुस्तर्हि का गतिः?

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ये किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा।
कालो ह्ययं निरवधिर्विपुला च पृथ्वी।।

इत्युक्त्वा हृदय-सान्त्वनमेव तदा शरणं स्यात्।

परं जगतीतले विरलतरस्तादृशो जनो यस्मै पयो न रोचते, तत्रापि चेत् सुरगवीपयः, का सम्भावना अरुचेः? अथ सम्भावना प्रदर्श्यते—तथा हि एतावत्कालपर्यन्तममरभारतीत्यपरपर्याया सुरगवी वर्तमानैवाऽऽसीत्। आसीच्च संस्कृतिरूपसुरगवीपयसो दोहनकर्तॄणां विदुषां सम्प्रदायोऽविच्छिन्न एव, क्षीणधारया प्रबलधारया वेत्यन्यदेतत्। संस्कृतविद्वन्मण्डलीभिश्च दुग्धमेतावत्कालपर्यन्तं सुरगवीपयः, समुपस्थापितमप्यासीत् कथञ्चिज्जननिवहमुखस्याग्रतः। तथापि सुरगवीपयो जनगणेभ्यो न रुचिरमभूत्। यत्कृतेऽयं शोको 'जनगणमनोवैमुख्येनावसीदति सुरगवी' ति प्रागुक्तम्। तद् यथा प्राङ् न रुचितं सुरगवीपयस्तथेदानीमपि पत्रिकायाः पत्रपुटे दुग्ध्वा संस्कृतिरूपं सुरगवीपयो जनगणमुखस्याग्रतः समुपस्थाप्यमानमप्यस्माभिः कथमिव रोचिष्यते—इति विभावनीयम्।

सत्यं, नैतावत्कालपर्यन्तं सुरगवीपयो रुचिरमभूत्। किमत्र कारणम्? न हि कारणविशेषमन्तरेण कार्यजन्म सम्भवदपि काव्यलोके, वास्तवलोके दृश्यते। तदिह निरूप्यते सुरगवीपयसोऽरुचिबीजं—न हि जनता वीतरागा। नापि सुरगवीपयो रसविहीनम्। दोहनकर्तारो यथा तथा वा सन्तु। न हि रुचिररुचिर्वा तानपेक्षते। एवं स्थितौ किमरुचिबीजमित्यत्र समाधानं—यथा

दुग्धं रसवदपि तद्रसलोलुपेभ्योऽपि जनेभ्यः कदाचिन्न रोचते, यदि स्याज्जीर्णेन मलिनेन सर्वथा श्रीविरहितेन पात्रेण समुपस्थाप्यमानम्। तदिदं परिवेषपात्राणामसौन्दर्यमपि एकमरुचिबीजम्। एवं स्थितौ यदुक्तं प्राङ्न रुचितमभूत् सुरगवीपयो जनेभ्य इति, तत्र परिवेषणपात्रमसुन्दरमासीदिति हेतोर्न जनेभ्यो रुचितमभूदिति निर्णयोऽस्माकम्। एवं चाशस्यते—यदि सुन्दरेण, सुप्रकाशेनेति यावत्, पात्रेण दुग्ध्वा संस्कृतिरूपं सुरगवीपयः जनतासमक्षमुपस्थापितं स्यात्तदाऽवश्यमेव तद् जनेभ्यो रोचिष्यत इति। सुरगवीपयसो जनसमक्षमुपस्थापनार्थमाधारभूतं च तत् पात्रं संस्कृतपत्रमेवेति वयं वदामः। पत्रमेव पात्रमिति स्वार्थे तद्धितप्रत्ययसम्भवात्।



## २९. तस्माद् युध्यस्व भारत !

शान्तिप्रियेऽपि भारते देशे प्रागेव बहोः कालात् युद्धकर्मणो माहात्म्यं सुप्रतिष्ठितं वर्तते। पुरा बहूनि राष्ट्रिय-युद्धानि बभूवुः, यत्र युध्यमानानि संस्कृतिं रक्षितुकामानि वीरसहस्राणि जीवन-साफल्यं लेभिरे। प्रथमं तावत् वैदिककाले देवासुरसंग्रामा आसन्। असुरा देवसंस्कृतिं विनाशयितुमेव चीनवासिन इव बद्धपरिकराः वर्षसहस्रं युयुधिरे। देवसेनानायको महेन्द्रो युद्धस्थलेऽपि सहयुध्यमानैर्ऋषिभिः परिष्टुतः प्रोत्साहितश्च वारंवारं चिरमयुध्यत। तेषु युद्धेषु असुरैः क्वचिदभिभूता अपि देवा युद्धमविहाय नानायुक्तिकौशलादीनि सम्प्रयुज्य विजयश्रियं प्राप्नुवन्। तस्मिन् युगे राष्ट्रियसत्तां प्रतिष्ठापयितुकामा एव धर्मशास्त्रज्ञाः विधानं प्रस्तावितवन्तः—राजसूयं विधातुमिच्छसि चेत् प्रथमं तावत् दिग्विजयं कुरुष्व। दिग्विजयं सम्पाद्यमान एव कश्चित् स्वराड् भवितुमर्हति। दिग्विजयमेव प्रथमं कृत्वा वाजपेयं सम्पाद्य च साम्राज्यपदस्यार्हता प्रसाधनीया। दिग्विज-येनैव स्वर्गेऽपि इन्द्रपदं लभ्यमिति। तेषु दिग्विजयेषु हिमालय-प्रदेशस्थानां पारसीकप्रदेशपर्यन्तानां वा भूखण्डानामाधिपत्यं सम्प्राप्तमासीत्। इतिहासादिषु तादृशानां दिग्विजयानां साङ्गोपाङ्गवर्णनानि अस्माकं तत्परत्वं प्रेरयितुमेवोपनिबद्धानि महर्षिभिरित्यहं मन्ये। ननु त्रिकालदर्शिनस्ते ऋषयो भारत-

राष्ट्रस्य भारतीयसंस्कृतेर्वा भाविसंकटस्थितीः परिहर्त्तुमेव दिग्विजयस्य श्रैष्ठ्यं प्रतिपादितवन्तः।

रामायण-युगेऽपि भारतीयसंस्कृतेः संरक्षणाय राक्षसैः सह युद्धं मर्यादापुरुषोत्तमेन रामेण समारब्धम्। राक्षसाः चीनदेशीया इवार्यसंस्कृतिं विनाशयितुकामाः सर्वत्र च वर्वरतामेव प्रसारयितुकामा वा आर्यविद्वेषिणो बभूवुः। आर्याणां यज्ञादिराष्ट्रोत्थानपराक्रमानसहमानास्तेराक्षसाःपदे पदे प्रगतिपथे विघ्नकारिण आसन्। तत्रापि ऋषीणां साहाय्येन रामादयो राष्ट्रियसंस्कृतेः परमोन्नायकाःताडकाखरदूषणरावणादीनां दुष्कृतनिष्कृतिं विदधुः।

भारतीयज्ञानाम्बुधिरिव महाभारतमस्माकं शाश्वतकल्याणं विधातुं युद्धपरायणतायाःपरमप्रयोजनं सन्दधाति। तत्र राष्ट्ररक्षां विधातुमेको विशिष्टवर्गः सन्धारितः क्षत्रिय इति। राष्ट्ररक्षार्थं संस्कृतिरक्षार्थं वा नित्यमेवायोधनं क्षात्रस्य जीवनलक्ष्यमासीत्। तद्यथा गीतायां प्रतिपादितम्—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥

महाभारतस्य युद्धं प्रारम्भमाणमासीत्। धृतराष्ट्रस्य वंशजा योद्धार आसन्। न कदापि तस्य पितुर्हृदयेभीतिरजायत—मरिष्यन्ति मे पुत्रादय इति। तेन स्वमतमभिव्यक्तम्—

क्षत्रधर्मः किल रणे तनुत्यागो हि पूजितः।

दुर्योधनस्यापि मतिरासीत्—

किं नु युद्धात्परं लाभं क्षत्रियो बहु मन्यते।

युद्धमरणमेव श्रेयस्करं न पुष्पशय्यामरणमित्याकलयन् कर्णः प्राह—

न चैतद्व्याधिमरणं क्षत्रं स्यादिति कौरव।
धनञ्जयेन योत्स्येऽहं स्वधर्मप्रीतमानसः।।

तादृशमपि कर्णं युद्धाय प्रोत्साहयन्निव भीष्मः प्रोवाच—

अनुजानामि कर्णं त्वां युध्यस्व स्वर्गकाम्यया।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते।।

नास्ति मृत्युर्नाम किञ्चित् शाश्वतसत्यम्। केवलं कापुरुषस्य जीवनकालेऽपि पुनः पुनः मृत्युर्भवति। किं न गीतायां प्रतिपादितम्—

न जायते म्रियते वा कदाचित्
नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे।।

अथवा—

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्य-
न्यानि संयाति नवानि देही।।

ततोऽपि निगूढतरमपरमपि धार्मिकसत्यं महाभारते उद्घोषितम्—सुवीराः युद्धे वीरगतिं प्राप्य पुनरपि स्वर्गे मिलन्ति। तत्र स्वर्गे सुप्रसन्ना एव पितरस्तं वीरं पश्यन्ति। विलासाश्चेदभीष्टास्तत्रापि युद्धस्य साधनता वर्तते। स्वर्गगामिनं युद्धवीरमप्सरसो वृण्वन्ति। ये लोकास्तापसैः उग्रतपोभिः प्राप्यास्तानेव योधनशीलः क्षत्रियोऽनायासं प्राप्नोति।

न केवलं क्षत्रिया एव युद्धस्यावश्यकतां मेनिरे परं च विदुरादयो महर्षयो युद्धस्य प्रशंसास्पदं स्थानं पश्यन्ति।

यदि मरणमवश्यमेव जन्तोः।
किमिति मुधा मलिनं यशः कुरुध्वे॥

इति निदर्शयन् विदुरः धृतराष्ट्रं समबोधयत—

यदा शूरं च भीरुं च यमः कर्षति भारत !
तत्किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ !
एवं राजन् तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम्।
न युद्धादधिकं किञ्चित्क्षत्रियस्येह विद्यते॥

यदि कश्चिद्वीरो लोके कीर्तिमाकांक्षेत् तस्य कृते युद्धमेव श्रेष्ठतमं साधनम्। महाभारतानुसारम्—

सा च युद्धेन नान्यथा।

उपर्युक्तं सत्यं सर्वैः पुरातनैः क्षत्रियैः सश्रद्धं स्वीकृतम्। युद्धभूमौ अभिमुखं मृत्युं प्राप्तुं ते समुत्सुका आसन्। तथापि यदि जीवनकाले युद्धावसरो नापद्येत तर्हि किं करणीयम्? यदि रणे नास्ति मरणविसरस्तदा अरण्यमेव वरणीयम्। ससुखं व्याधिगतं वा यदि म्रियसे तर्हि नरकगामिनी ते प्रतिपत्तिः। अतो युद्धमरणमेव वरणीयम्।

महाभारतस्य विदुलोपाख्यानं युद्धस्य सर्वोच्चप्रतिष्ठां निदर्शयति। अस्मिन्नाख्याने विदुला नाम माता संजय इति विख्यातं स्वकीयं निर्जितं पुत्रं शयानं दीनचेतसं दृष्ट्वा तं जगर्हे। प्रसङ्गेऽस्मिन् सा विदुला भारतमातेव पुत्रं प्रोत्साहयितुं यत्प्रोवाच तत्सर्वं साधु विचार्यास्माभिः तस्य पुत्रेणेव विजयाय वद्धपरिकरैः भवितव्यम्। मात्रा प्रोक्तम्—

कृत्वा मानुष्यकं कर्म सृत्वाजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ।।

इयं महाभारतीया वाणी अद्यापि चिरन्तनसत्यमिवास्माभिः ग्रहणीया।

न हि विस्मरणीया दिग्विजयगुणा इति महाकविबाणेन सप्तमशताब्द्यां स्मारिता वयं न पुनर्जागरिताश्चिरं दुर्दशामन्वभवाम। स बाणसन्देशः शाश्वतसत्यमेव युगानुरूपो वर्तते इति तं विचारयन्तु पाठकाः—"शनैः शनैश्च स्वेच्छया परिभ्रमन्नमयन्नुन्नतान्, उन्नमयन्नतान्, आश्वासयन् भीतान्, रक्षन् शरणागतान्, उन्मूलयन् विटपकान्, उत्सादयन् कण्टकान्, अभिषिञ्चन् स्थानस्थानेषु राजपुत्रान्, समजयन् रत्नानि, प्रतीच्छन्नुपायनानि, गृह्णन् करान्, आदिशन् देशव्यवस्थाः, स्थापयन् स्वचिन्हानि, कुर्वन् कीर्तनानि, लेखयन् शासनानि, पूजयन्नग्रजन्मनः, प्रणमन् मुनीन्, पालयन्नाश्रमान्, जनयन् जनानुरागं, प्रकाशयन् विक्रमम्, आरोपयन् प्रतापम्, उपचिन्वन् यशः, विस्तारयन् गुणान्, प्रख्यापयन् सच्चरितम्, आमृदंश्च वेलावनानि बलरेणुभिराधूसरीकृतसकलसागरसलिलः पृथिवीं विचचार।"

अभिनवराज्याधीशानां पूर्वकालत एव प्रतापारोपणस्य विधानमवसितम्। तद्धि बाणेन निर्दिष्टम्—"अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति।"

ननु भारतीयगणतन्त्रस्य प्रतापारोपणयुगमिदम् । नावलम्बनीयः पराभवपथोऽस्माभिः । चारित्र्येण, वर्चसा, पराक्रमेण च भारतस्य विजयिनी सेना नित्यं नूतनं गौरवपदमादधाना परतो मातृभूमेः कणशो रक्षां करिष्यतीति मार्गः स एव ग्रहणीयः, यः कृष्णेन प्रतिपादितः—तस्माद्युध्यस्व भारत ! तदेवास्माकं व्रतं भूयात् ।

इतिहासयुगीनतमिलसाहित्ये सैनिकानां प्रोत्साहनानुपमेव वर्तते । तद्यथा मातुः पत्न्याश्चैदृशं संसूचनं वर्तते—मम स्तन्यस्य साफल्यं सौभाग्यस्य प्रतीकं वा तव युद्धपराक्रम एव । युद्धे मरणमेव श्रेयस्करं न तु तस्मात् पलायनम् । नार्यस्तत्र युद्धे मृतानामथवा विजयिनां यशोगाथा अगायन् । काचिन्माता युध्यमानं पुत्रमधिकृत्य संवदति—पुत्रश्चेन्मे युद्धस्थलात्परावर्तेत, अहं तौ स्तनौ कर्तयिष्यामि ययोः पयःपानं तेन कृतम् । काचिदपरा वीराङ्गना संवदति—युद्धे अश्मा इव स्थितो मे पिता हतः । मम पतिरपि युध्यमान एव मृतः । मम ज्येष्ठभ्राता शत्रून् परावर्तयन्नेव प्राणांस्त्यक्तवान् । मम पुत्रश्च स्वपक्षीयसैन्ये विघटितेऽपि निर्भरोत्साह एव शरान् साधयन् शत्रुराजं हतवानिति प्रमोदविषयः ।

पुरा तामिलप्रदेशस्य एका रीतिरासीत्—गृह एव मरणासन्नं जनं कुशासने शाययित्वासिना तस्य शिरस उच्छेदनस्य । न मृतोऽयं जनः युद्धे इति शोचनीयं मत्वा युद्धमरणमिव श्रेयस्करं तद्विधानमवसितं शास्त्रकारैः । तत्र युद्धे मृतानां पूज्यपुरुषाणां स्मारिका निर्मिताः । तेषां मूर्तेरधः तेषां यशोगाथा चारुचरितावली वोत्कीर्णा युवकान् प्रोत्साहयितुमासीत् । ईदृशो

लेखो वीरवक्कलमिति विख्यातः। लेखोऽयं मन्दिरप्राङ्गणेषु प्रतिष्ठापितो नागरैः।

भागवतधर्मानुसारं युद्धमरणं तु महाश्रेयस्करं ब्रह्मसमाधि-मरणमिवेति व्यासेन सन्दर्शितम्—

द्वौ सम्मताविह मृत्यू दुरापौ
यद्ब्रह्मसन्धारणया जितासुः
कलेवरं योगरतो विजह्याद्
यदग्रणीर्वीरशयेऽनिवृत्तः ॥

अधुना भारतीयानां चीनवासिभिः सह हिमालय-प्रदश युद्धावस्था वर्तते। हिमालयस्तु मुकुटमिव भारतस्य प्राणपणैः रक्षणीयः। यदि नाम स्वातन्त्र्यस्य प्रारम्भिकयुगस्य युद्धेषु शिथिलाः स्याम वयं, तर्हि अस्माकं दौर्बल्यं शान्तिप्रियत्वं वा मनसि विचार्य संस्कृतिहीना वैदेशिका भारतस्याङ्गभङ्गं कर्तुं समुद्यताः सदैव भविष्यन्ति। इदमपि विचार्य सत्यमेव भूयादस्माकमनुष्ठानम्—तस्माद् युध्यस्व भारत इति।

●

## ३०. आधुनिकशिक्षानीतिः

भारतदेशोऽधुना स्वतन्त्रो वर्तते। किन्तु देशेऽस्मिन् स्वातन्त्र्यं नाममात्रमेव दृश्यते। तथा हि—अधुनाऽपि सर्वासु राष्ट्रिय-प्रवृत्तिषु वयं परमुखापेक्षिणः। प्रादेशिकभाषाणां राष्ट्रभाषाया वा अभ्युदयाय वयं न तावन्मात्रं प्रयत्नशीला यावन्मात्रमांग्ल-भाषायाः प्रसाराय उत्थानाय वा वर्तामहे। पारतन्त्र्ययुगेऽपि आंग्लभाषाया अध्ययनं प्राथमिकशालासु अनिवार्यं नाभवत् किन्तु तदेव स्वतन्त्रे भारते सर्वैर्विद्यार्थिभिरनिवार्यरूपेण ग्रह-णीयं संजातम्। सर्वासु शिक्षणसंस्थासु न केवलमध्ययनविषया अपि तु विद्यार्थिनां शिक्षकाणां च वेश-भूषाः प्राक्तनतोऽप्यधिकतरं योरपीयपद्धतिमनुसरन्ति। पूर्वं तावत् भारते समुद्भवानां महापुरुषाणामादर्शभूतानि नामानि सुचरितानि वचनानि च प्रेरणाप्रदायीनि आसन्। अधुना तानि सर्वाणि विस्मृतानि एव। न दृश्यते कर्हिचित् भारते भारतीयता नाम। तर्हि क्व वर्तते भारते स्वतन्त्रता इति वितर्कः। हा कष्टं खलु, भारतराष्ट्रस्य नीतिविशारदानामौदासीन्यमेषु विषयेषु वर्तते।

कस्यचिद्राष्ट्रस्य निर्माणे शिक्षणसंस्थानां महत्त्वपूर्णं भागदानं वर्तते। दुर्भाग्यवशादाधुनिकयुगे भारतीयशिक्षण-संस्थानां संचालनं तैरेव महाभागैः प्रायशः क्रियते, येषां दृष्टिः आर्षपथाद्विमुखी वर्तते। स्वयमेव ते वैदेशिकशिक्षापरायणा वैदेशिकसंस्कृतौ सुस्नाता आत्मीयां नैसर्गिकीमपि भारतीयतां

परित्यक्तुकामा योरपीयपटवासैः समलङ्कृताः सन्तः भारतभारतीं बोद्धुमपि आत्मानमसमर्थान् प्रदर्शयन्ति।

यत्र कुत्रचित् भारतीयतायाः संरक्षणाय उपायबीजं निर्दिष्टं तदेव विश्वविद्यालयप्राङ्गणेषु निक्षिप्तमनङ्कुरितमेव विनष्टम्। तथा हि 'युनिवर्सिटी-कमीशनरिपोर्ट' इति नामके ग्रन्थे विश्वविद्यालयेषु भारतीयतायाः प्रतिष्ठापनाय समुपबृंहितोऽयं विषय ईदृशो वर्तते—

'यदि विशेषज्ञसमूहावन्धिनी समाजस्य विच्छिन्नता अनपेक्षिता तर्हि युवकेषु भारतीयसंस्कृतेर्मूलादर्शाः प्रतिष्ठापयितव्याः। वैशिष्ट्यानुबन्धातिशयेन विशकलितप्रायोऽस्माकं समाज, उपर्युक्तविधिना पुनः संश्लिष्टसर्हति।'....

'शताब्दात् किञ्चदधिकवर्षं यावत् प्रचलितायाः शिक्षानीतेः महानयं दोषो निगद्यते यत् सम्यगुपेक्षितं वर्ततेऽस्यां पूर्वकालिकं भारतम्। अपरञ्च विद्यार्थिनां कृते भारतीयसंस्कृतेः परिचयार्थं किञ्चिदपि निर्धारितं नास्ति। फलतः कतिपयेषु विद्यार्थिषु भावनेयं वर्तते यद्वयं मूलहीनाः स्याम। अपरेषु च हीनतरा मानसी वृत्तिः सञ्जायते यत् स्वकीयमूलादानेन तावद्वयं वर्त्तमानविश्वप्रवृत्तेः किञ्चिद् भिन्नाभिः वृत्तिभिः विनिवद्धा भवाम।'

अस्मदधःपाततमोयुगेष्वपि भारतीयसंस्कृतेः प्रकाशः कदापि न व्यलुप्यत। प्रकाशोऽयं क्वचिदस्थिरोऽभवत् किन्तु निर्वाणं न गतः। सस्नेहं परिपालितोऽयं प्रकाशोऽधुनापि द्विगुणितप्रभया समुल्लासते। भारते संस्कृतिप्रकर्षानुभाविनी समीहा चेत् तर्हि अस्माभिरस्य पूर्वकालीनगौरवं समकालीनमूल्यं चावधारणीयम्।

'न कस्मिंश्चिदपि विश्वविद्यालये उपर्युक्तनिर्देशानुसारं कार्यं सम्पादितम्।' किमिदं न ज्ञातं यत् भारतीयानां चरित्रोत्थानस्य महती आवश्यकता इदानीं वर्तते। तथापि विश्वविद्यालयानामधिष्ठातारो न प्रवर्तयन्ति सच्छिक्षासूत्रम्। अत्र कोऽपराद्ध इति स्पष्टमेव।

गीतादिग्रन्थानामस्माकं पाठ्यक्रमे स्थानं न भवेत् तेषां तथाकथित-हिन्दुत्वपरायणत्वात्। तथापि किं नास्माकं राष्ट्रपितुः महात्मगान्धिनः उपदेशपूराणि पुस्तकानि विद्यार्थिनां कृते बालकालत एव सर्वासु कक्षासु निर्धारयितव्यानि। तेषां पुस्तकानामध्ययनेन विद्यार्थिषु सदाचारः, उत्साहः, देशभक्तिः, सत्यम्, उपकारवृत्तिः, आर्जवम्, सच्चरितमित्येतेषामात्मगुणानामभिवृद्धिः समुपजायते। भूयो भूयो भृशं प्रार्थितैरपि एभिः शिक्षाधिकारिभिः विद्यार्थिनां चरित्रविकासाय न समीहितं समारब्धम्। चरित्रे विनष्टे राष्ट्रश्रीरपगता एव भवति इति सर्वेषां विदितम्।

विश्वविद्यालयेषु अध्ययनव्ययो नित्यमेव संवर्धते। तत्र विद्यार्थिनः उच्चाट्टालिकामयेषु छात्रावासेषु कतिपयवर्षं वसन्ति, भोजन-परिधानमनोरञ्जनादिषु शतप्रायान् रूपकान् व्यययन्ति। स्पष्टमेव विद्यार्थिनां जीवनस्तरः पर्याप्तं उच्चैर्गच्छति। उपाधिं गृहीत्वा गृहस्था भूत्वा च न ते तावन्मात्रं धनमर्जयन्ति येन पूर्ववत् तेषां उच्चजीवनस्तरः प्रचरेत्। तस्यां स्थितौ विवशाः परवशा इव ते अधिकधनेच्छव उत्कोचादिभ्रष्टाचारेणात्मानं पातयन्ति। तेषां कामः' 'हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।'

न केवलं विद्यार्थिनामुपर्युक्तविधिना चरित्रभ्रंशो जायते अपि तु तेषामभिभावका अपि: स्वपुत्रादिभ्य उच्चशिक्षां प्रदातु-कामाः तेषामर्थे क्वचिद् भ्रष्टाचारविधिना धनमर्जन्ति । इयं कथा विलासपूर्णायाः विश्वविद्यालयीनसरस्वत्याः सम्पादनस्य । सर्वमत्र चाकचक्यं चारित्र्यविलोपि जातम् ।

वृत्तिरत्र शिक्षणसंस्थासु न पूर्णतो महनीया वर्तते । शिक्षकाऽ-अन्ये वा कर्मचारिणस्तत्र मलिनोपायैः स्वकीयामुन्नतिं पार-यन्तीति धारणा बहूनां मनसि वर्तते । अधिकारिणोऽपि चाटुवाक्यैः उपहारादिभिर्वा तावन्मात्रं सुप्रसन्ना भवन्ति, यावन्न भवन्ति कर्मनिष्ठया । तेषां विचारधारणा न प्रायशो निराधारेत्यपि दृश्यते । तर्हि नास्त्यवसरः सदाशयताया अस्मिन्युगे इति विचारयन्तोऽध्यापकाः कथं कथंचित् वेतनोपायं कुर्वन्त एव जिजीविषन्ति । न हि ते शिक्षणप्रणालीं सद्ज्ञानजीवननिर्भरां विधातुमुत्कायन्ते ।

कतिपयशिक्षणसंस्थासु निर्वाचनविधिना पदाधिकारिणः सदस्याश्च निर्धियन्ते । निर्वाचनविधौ असत्कल्पानां साहाय्यं नाविदितं क्वचित् । प्रायशो निर्वाचनपद्धतिमनुगन्तुकामाः शिक्षका अपि अनर्हकौटिल्यपथमनुसरन्ति । तर्हि का चरितगाथा तेषां विद्यार्थिनां भविष्यतीत्यस्मिन्विषये मौनावलम्बनमेवो-चितम् । याः काश्चित् शिक्षणसंस्था बहुजनहिताय वा दरिद्रा-णामपि कृते वा उन्मुक्तद्वाराः सन्ति, तासां सौभाग्यविपर्यासः परिलक्ष्यते सर्वत्र । तासामुपाधीनां मान्यता न स्वीकृता शासना-धिकारिभिः । परिणामतः विद्वांसोऽपि तत्रोपाधिधारिणः विशकलितमनोरथा एव परिभ्रमन्ति ऐश्वर्यविहीनाः । हा हन्त,

स्वातन्त्र्योपलब्धिरपि भारतीयविद्यानां संस्कृतपाठशालादीनां च पुनरुत्थानं विना असिद्धा। परतन्त्रेऽपि भारते देशिराज्येषु क्वचित् संस्कृतविद्याया अभ्युत्थानं महाविद्यालयादिषु बभूव किन्तु तेषु राज्येषु विलयं गतेषु तत्रत्याः संस्था विनशनं प्राप्ता इत्यस्माकं पुरत एव प्राचीनपाठशालानां हृदयविदारिपरलोक-गमनदृश्यं कस्य सहृदयस्य हृदयं न दुनोति।

सार्वत्रिकसहानुभूतेः समुत्पादनं यदि शिक्षायाः परमोद्देश्यं स्यात् तर्हि आधुनिकशिक्षानीतिः सर्वथा विफला वर्तते। विज्ञाना-यातिशयमाहात्म्यप्रदानेन कलादीनां संक्षयो विपरिणमितः। विश्वविद्यालयेषु केवलं विज्ञानाध्ययनेनोच्चविद्यार्थिनां सौरस्यं हृदयस्य न विलसति। किमियं न महती हानिर्यद् यन्त्रीकरणं नाम मानवव्यक्तित्वस्य। तद्यथा कथमपि विज्ञानाध्ययनस्य कलाविहीनत्वं परिहरणीयमित्यलं बहुविवेचनेन।



## ३१. संस्कृतं जीवति वा न वा

अनादि-निधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः ॥

संस्कृतं मृतमिति योरपीयविदुषामुक्तिमुच्चपदाधीशा अपि कतिपयभारतीयाः संस्मरन्तः यदा-कदा तथानुवचन्ति। श्रोतारः पुनः विश्वसन्ति—संस्कृतं मृतमेव। न ते पृच्छन्ति—कदा मृतम्, केन रोगेण मृतम्, केन मारितं वा। तद्यथा जवाहरलाल-नेहरू-महोदयो लोकसभायां प्रोक्तवान्—'संस्कृतं नाम भारतवर्षस्य मनन-संस्कृत्यैतिह्यानां सामान्यतः प्रकाशकं बभूवेति यः कश्चिदपि दृढं वक्तुं समर्थः। नितान्तमेतत् दुःखकरं यत्संस्कृतभाषा सर्वथा मृता सञ्जाता। यानादर्शान् वयं भारतीया लालयामस्तेषां कृते महतीयं दुःखकरी स्थितिः। किन्तु २००० वर्षेभ्यः पूर्वं यदा प्रभृति प्राकृतभाषायाः प्रयोगः समारब्धस्तत एव संस्कृत-भाषायाः सामान्यजनप्रयोज्यत्वं विनष्टम्।'

उपर्युक्त-मतानुसारं संस्कृतस्य तथाकथितमृत्युः द्विसहस्र-वर्षात् प्रागेवाभवत्। विचारणीयोऽयं प्रश्नः संस्कृतभाषाया मरणस्य पश्चात् कालिदासः, भारविः, भवभूतिः, कल्हणः, श्रीहर्षः, जगन्नाथादयो बहवः प्रथितयशसो महाकवयो बभूवुः। नेहरू-मतेन संस्कृतस्य मृत्योः पश्चात् प्राकृतेन जन-भाषा-पदं गृहीतम्। किं नेदं सत्यम्—यत् प्राकृतभाषायां कदापि तावानुच्चकोटिकः

कश्चित् कवि नैवाभवत्, यावन्तः संस्कृतभाषाया उपर्युक्तमहाकवय आसन्। कीदृशमिदं संस्कृतस्य मरणं यदनुमरणमपि संस्कृत-शवानुसरणं महाकवित्वं ददाति। तत् तु प्राप्यं नान्यथा।

इत्थं तत्त्वतो विश्लेषणेन सिध्यति यत् संस्कृतस्य मृत्युः मिथ्या वार्तेति। संस्कृतं हि देवभाषा। अमराणां वाणीयम्। अमरं संस्कृतम्, कदापि मृत्युं नार्हति, संस्कृतं न मृतम्, न म्रियते, न मरिष्यति वा।

ख्रीष्टीयाष्टादशशतकं यावत् भारते बहवः प्राकृतभाषाः संस्कृतेन सह जीविता आसन्। सर्वास्ता भाषाः संस्कृतेन सह संवर्धन्ते स्म। नासीत् क्वचित्संस्कृतं प्रति ईर्ष्या। संस्कृतस्य माहात्म्यं सर्वैः स्वीकृतम्। यद्यपि संस्कृतं जनभाषा नासीत्, तथापि संस्कृतं सर्वेषां सुसभ्यानां मातृभाषा, कुटुम्बभाषा, कुलभाषा चासीदेव। संस्कृतमेवाध्ययनाध्यापनस्य द्वारं साधनं वाभवत्। कथमीदृशी भाषा मृता कथ्यते? नासीदष्टादशशताब्दी-पर्यन्तं कापि उच्चशिक्षण-संस्था अस्मिन् देशे, यत्र संस्कृतं विहायान्यासां भाषाणां माध्यमत्वं स्वीकृतम्।

भारतस्य राष्ट्र-भाषा ख्रीष्टीयाष्टादशशताब्दीं यावत् संस्कृतमेवासीत्। संस्कृतज्ञा एव यात्रिकाः कश्मीरतः कन्याकुमारीपर्यन्तम्, गुर्जरप्रदेशतः असमपर्यन्तं वा सुखं प्रचरन्ति स्म, सर्वत्र च विचारप्रसारं संस्कृतमाध्यमेन कुर्वन्ति स्म। युगान्तरालेऽस्मिन् विविध-विषयेषु संस्कृतमवलम्ब्य यावन्तो ग्रन्था भारतस्य सर्वेषु भागेषु पूर्वद्वीपसमूहेषु च प्रणीताः, न तावन्तः कस्यामपि प्रादेशिकभाषायां ग्रथिताः। दर्शन-धर्म-काव्य-विज्ञानादीनि अधिकृत्य प्रायशः सर्वे प्रमुखग्रन्थाः संस्कृत एव लिखिताः

न तु प्राकृते। ईदृशो अपि संस्कृतभाषा यदि मृता कथ्यते तर्हि मरणमपि अस्या जीवनाद्वरम्। तेऽपि के भारता ये योरपीय-मतस्य सत्यासत्यमविचार्यैव तत् स्वीकुर्वन्ति, देवभाषां वा तिरस्कुर्वन्ति, मृतभाषेति वा कथयन्ति।

संस्कृतेऽधुनापि पञ्चाशत्प्रायाः पत्र-पत्रिकाः प्रकाश्यन्ते, प्रतिवर्षं शतादप्यधिकमभिनवग्रन्था विरच्यन्ते, सहस्रेषु संस्कृत-विद्यालयेषु तस्य माध्यमेन विद्यार्थिनः शिक्ष्यन्ते, यस्मिन् सहस्रशः शास्त्रार्थविवादादयः प्रतिवर्षमायोज्यन्ते च, किमधिकं जीवनस्य लक्षणम् ? यदि संस्कृतमधुना साधारण-जनभाषा नास्ति, तर्हि नास्तीदं मृत्योर्लक्षणम्। चिरकालात् सुसभ्यैः स्वीकृतेयं संस्कृतभाषा साधु जीवति, जीविष्यति च शश्वत्। पुराकालीन-योरपीयभाषा वस्तुतः मृताः। न तासु पत्र-पत्रिकाः प्रकाश्यन्ते, न वा ग्रन्था विरच्यन्ते।

ध्रुवमेव संस्कृतं भृशं जीवति। तस्य मरणं कदापि न भूतं भविष्यति वेति साधुमतम्। संस्कृतमवलम्ब्य परस्परवार्तालापा-दिना वा संस्कृतस्य सजीवता अवराणां मनसि यथा प्रतिफलेत् तथा प्रयतनीयं संस्कृतानुरागिभिः। तथा हि—स्वकुटुम्बे दैनन्दिनसाधारणवाक्यानि संस्कृतेन भाषेत्। संस्कृतस्य विद्यार्थिनः प्राध्यापकाश्च परस्परं संस्कृतेन वदेयुः, पत्राचारं च मिथः संस्कृतेन व्यवहरेयुः। संस्कृतसंस्थासु—महाविद्यालयेषु, विश्वविद्यालयेषु च केवलमपवादरूपेण संस्कृतेतरभाषाणां प्रयोगो भवेत्। तत्र न केवलं विद्यार्थिनः प्राध्यापका अपि तु सर्वे कर्मचारिणः शासनाधिकारिणश्चापि संस्कृतेन व्यवहरेयुः। कस्या अपि भाषायाः साहित्यस्य वा सम्यग्ज्ञानं तावत्कालं भवितुं

नार्हति, यावत्कालं तत्सम्बन्धिभाषायां भाषणं न क्रियते। इदमेव तथ्यं विचार्य संस्कृत-विद्यार्थिनः संस्कृतेन भाषणमभ्यस्येयुः। इदमपि संस्कृतस्य जीवनमास्ते।



## ३२. संस्कृत-विश्वविद्यालयाः

मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥

एतादृश आसीत् कुलपतिः प्राचीन-संस्कृत-विश्वविद्यालयाम्। प्राचीनशिक्षणपरम्परामनुसृत्य भारते शिक्षणपद्धतिः प्रतिष्ठापनीयेति विचारयन्तो वहवो विचारधुरीणाः संस्कृत-विश्वविद्यालयानां स्थापनार्थं समुत्सुका भवन्ति। तथापि वर्त्तमानसंस्कृतविश्वविद्यालयानां महाविद्यालयानां वा दुःस्थितिं दृष्ट्वा हतोत्साहास्ते जायन्ते। पण्डितमदनमोहनमालवीयः संस्कृतविश्वविद्यालयस्य स्थापनां कर्त्तुमैच्छत्, परन्तु आंग्ल-रीतिमनुसरन्तं विश्वविद्यालयं स्थापितवान्।

विगतदशके कतिपयसंस्कृतविश्वविद्यालयाः संस्थापिताः, किन्तु तेषु तेषु विश्वविद्यालयेषु विद्यार्थिनां संख्या स्वल्पैव वर्तते, अध्येयविषयाणां समीचीनवैविध्यमपि तत्र न दृश्यते, प्राध्यापकानां स्नातकानां च शोधवृत्तिरपि कुण्ठितैव लक्ष्यते, अध्ययनाध्यापनस्योच्चस्तरस्य तत्र का कथा ? न तस्य दर्शनं क्वचिदपि आधुनिके युगे भारते भवति। न तेषां संस्कृतविश्वविद्यालयानां स्वनामार्हणत्वमीषदपि राजते। अपरञ्च प्राध्यापकानामनार्षजीवनवृत्तिर्व्यवहारो वा भवति।

एतत्सर्वं दृष्ट्वा वितर्को जायते—अस्ति काचिदावश्यकता संस्कृतविश्वविद्यालयानाम् ? पाश्चात्यरीत्यनुसारिणो वहवो

विश्वविद्यालयाः सन्त्येव। तेषु विश्वविद्यालयेषु बहुविधज्ञान-विज्ञानादिभिः सह संस्कृतमपि पाठ्यते। तत्र शोधपरम्परा भारतीयपुरातत्त्वमपि स्पृशति। किमवशिष्टं वर्तते, यत् संस्कृत-विश्वविद्यालयैः सम्पादनीयं भवेत्। तद्यथा मया दृष्टमनुभूतं च संस्कृतविश्वविद्यालयानामधिकारिणः प्राध्यापकाश्चास्मिन्विषये विमर्शस्पशाः न सन्ति।

भारतस्य भारतीयता यदि रक्षणीया स्यात्, तर्हि तस्याः संरक्षकाः सम्पादनीयाः। न ते संरक्षका बहुसंख्यकेषु साधारण-विश्वविद्यालयेषु निर्मिता भवन्ति। इमे साधारणविश्वविद्यालया-स्तु पाश्चात्यसंस्कृतिमनुधावन्ति। एतेषां साफल्यं तु भारतस्य योरपीकरणे एव विद्यते। न तत्र भारतीयताया दर्शनं भवति। अपवादस्वरूपा एव तत्र भारतीयसंस्कृतिमनुसरन्तः प्राध्यापका विद्यार्थिनो वा। अन्ताराष्ट्रियसंस्कृतेः संरक्षका एतेषु विश्वविद्यालयेषु निर्मीयन्ते। भारतीयता नाम तत्रोपहासपदमुपपद्यते।

तर्हि किं करणीयं संस्कृतविश्वविद्यालयानां सम्यक्परि-पालनाय? प्रथमं तावत् संस्कृतविश्वविद्यालयानां स्थितिः नगरेभ्यः सुदूरं भवतु। नगरोद्भवो धूलिरपि सद्वृत्तिं क्वचित् हन्तीति श्रूयते। तत्पूर्णसत्यमिति मे मतिः। संस्कृत-विश्वविद्या-लयानां सर्वे प्राध्यापका अधिकारिणश्च न केवलं भारतीयसंस्कृतेः वाचा समर्थकाः सन्तु, अपि तु मनसा वेषादिभिश्च ऋषिकल्प-परायणा भवन्तु। नेमे विश्वविद्यालया जीर्णानां मृतविद्यानां विदुषामावासाः सम्पादनीयाः। ते एव प्राध्यापकाः शोध-सञ्चालका वा तत्र नियोज्या येषां निष्काममपि अध्ययना-

ध्यापनं विश्रुतं वर्तते। केवलं मुखशूराणां विदुषामुपस्थितिर्ज्ञानभूमिं ग्रामीकरोति।

कुलपतय उपकुलपतयोऽन्ये वा पदाधिकारिणः संस्कृतविश्वविद्यालयानां ते एव महानुभावा भवन्तु ये पूर्वोक्तकुलपतिपण्डितमदनमोहनमालवीयस्य आचार्यनरेन्द्रदेवस्य वादर्शं भजन्ते। एतादृशा जनाः संस्कृतविश्वविद्यालयानां महतीं हानिं कुर्वन्ति करिष्यन्ति च। तादृशा योग्या जनाः सन्ति, किन्तु तेषां लोकव्यवहारगतिः कुण्ठिता वर्तते। न ते अनर्हप्रयासेनाग्रेसरा भवितुमिच्छन्ति। तान् महापुरुषान् संस्कृतविश्वविद्यालयानां धुरि नियोजयितुमस्माकं सत्याग्रहोऽपेक्ष्यते।

अपरञ्च विद्यानामर्जनं न केवलं लोकैश्वर्यपदादीनां प्राप्त्यर्थमेवास्ति, अपि तु प्रथमं तावत् आध्यात्मिकशान्तिप्राप्तये भवतीति विद्यार्थिनां मानसे पुनः सन्धारयितव्यमाचार्यादिभिः न केवलं वाचा अपि तु स्वकीयेनोदात्तेन प्रकामप्रशान्तेन च व्यक्तित्वेन। धनार्जनशक्तिप्रदायिनी अपरा विद्या न तावदुत्कर्षविधायिनी भवति, यावत् परा विद्या, यया ब्रह्म निष्पद्यते इति आचार्याणां जीवनादर्शेन विद्यार्थिनः सम्यङ् निबोधन्तु।

एतादृशो विश्वविद्यालया आधुनिकयुगेऽपि सफला भविष्यन्ति ऋषीणां तर्पणाय।

भारतस्य प्रथमः प्रसिद्धिं गतो विश्वविद्यालयो महाभारतयुगे तक्षशिलायामासीत्। तत्र विभिन्न प्रदेशेभ्यो विद्यार्थिन उच्चाध्ययनाय समूढा आसन्। तस्मिन् विश्वविद्यालये वेदैः सहाष्टादशशिल्पानां हस्ति-सूत्रस्य, धनुर्वेदस्य च शिक्षा

सुव्यवस्थितासीत्। पाणिनिः कौटिल्यश्च तस्मिन् विद्यापीठे अधीतवन्तौ। विश्वविद्यालयस्यावस्थितिरुपनदप्रदेशेऽभवत्। विद्यालयभवनानि गिरिप्रस्थेषु निर्मितानि बभूवुः। परिवर्तियुगे एतादृशो विश्वविद्यालया बौद्धानां नालन्दा-विक्रमशिला-वलभिप्रदेशेषु विराजमाना बभूवुः। तत्र तात्कालिकविश्वेभ्यो विद्यार्थिनः समागताः। शङ्कराचार्येण तादृशो विश्वविद्यालयाः पुरी-काञ्ची-द्वारका-बदरीषु चतुःसीमान्तप्रदेशेषु प्रतिष्ठापिताः।



## ३३. भारतराष्ट्रस्य भविष्यम्

समुच्चैरस्मिन् पदे स्थापयद्भिर्मम देशवासिभिर्यो बहुमानो मह्यं निवेदितः तेनाहं नितरां विह्वलीकृतोऽस्मि। न विद्यतेऽस्मिन् विषये मनसि मे स्तोकोऽपि मोहः। एषा खलु मैत्री जनानां स्नेहश्च ममोपरि, न मे तादृशी काचन सेवा, यौ मामस्मिन् गौरवार्हेऽधिष्ठाने स्थापितवन्तौ। मया विधास्यमानानां कर्त्तव्यानां महत्त्वेन दुरूहत्वेन च श्रीमतां डा० राजेन्द्रप्रसादमहाभागानां घनिष्ठात् दशवर्षव्यापिसाहचर्यात् कथञ्चिदस्मि परिचितः। विनयावर्जितेन चेतसा कथयितुमिच्छामि यदहं स्वदेशवासिनां मयि महत्या आस्थायाः किञ्चिदपि योग्यत्वमर्जयितुमवशिष्टं च स्वल्पमायुष्कालं तेषामेव सेवायां नियोजयितुं यथाशक्ति प्रयासं करवाणि। सेवैव पूजनम्। 'तदेवेश्वरपूजनम्।' नवीनस्य जगतो नवीनस्य च समाजस्य निर्माणार्थं कर्मभिरेव वयं सृष्टिकर्तारं पूजयितुमर्हाः।

सत्यमेव परममिति सर्वेषां धर्माणां निश्चयः। प्रस्थानानुसारिणः प्रस्थानरहिताश्च सर्वे मनुष्याः सत्यस्यैवोपासकाः। यतो हि सत्यमेव महत्तमं सान्त्वप्रदं समुद्बोधकञ्च। सर्वमन्यद् विनश्यति, सत्यं तु न कर्हिचित्। यथा दृश्यते छान्दोग्योपनिषदि—तत् सत्यम्। स आत्मा। तत्त्वमसि। इति।

राष्ट्रं हि नाम न केवलं व्यक्तीनां समवायः। तद्धि खलु हृदयमनसां साहित्यभित्तिकः कश्चित्समाजो मनुष्याणाम्। राष्ट्रमात्रस्य विशेषतोऽस्मद्राष्ट्रस्य कृते यानि शाश्वतानि तत्त्वानि

महत्त्वं भजन्ते तानि—परमं ज्ञानम्, प्रेम, त्यागश्च, इत्येतानि चतुःसहस्रवर्षेभ्यः पूर्वादेव उत्तराधिकारसूत्रेणास्माभिरुपलब्धानि। यावद्वयमस्माकं हृदयेषु काष्ठां गतान्येतानि शाश्वततत्त्वानि धारयिष्यामः, तावदस्माकमायतिर्निरापदा। भूकम्पादिना विचाल्यमानायामपि धरित्र्यां नैतेषां मूलानि कम्प्येरन्।

अनादिकालाद् भारतवर्षम् एतद्देशमाश्रयतया अंगीकुर्वतां जनानां मातेव पुत्रेभ्यः स्वाभिमतं सुखं, तेभ्यो बौद्धिकीं पुष्टिमाध्यात्मिकीं च शान्तिं वितरदास्ते। नैतान्यपत्यानि तुल्यरूपाणि, तानि तु भेदयन्ति। प्राणानामैक्यं, सर्वभूतेषु एकात्मत्वं, सत्ये उपलब्धे पूर्णानन्दानुभूतिश्च—इत्येतान्यवलम्ब्य भेदं एव केवलं सर्वान् मेलयितुं प्रभवति। अस्माभिर्विविचित्रेषु प्रस्थानेषु ईदृशी महती आत्मीयताबुद्धिः, अस्मच्छक्तिबीजं मतवादमोहमुक्तिश्च यत्नतः समाश्रयणीये।

अस्माकं राष्ट्रव्यापारेऽस्माभिर्न राजनीतिकसाधनमात्ररूपेण, अपि तु नैतिकबुद्धया जनतन्त्रमार्गः स्वीकृतः। एष खलु मार्गोऽस्मदीयेन महता ऐतिह्येन, आचारमार्गेण च संगच्छते। साम्यभूमिं विना स्वातंत्र्यं निरर्थकम्, न्याय्यं धनवितरणं विना च साम्यमसम्भवमित्यस्माकमनुभवः। न्यायसाम्यस्वातंत्र्याणि न केवलं समर्थनीयानि काम्यतत्त्वानि, तानि तु गम्यानि लक्ष्याणि। तेभ्यो लक्ष्येभ्यः प्रायशोऽस्माकं च्युतिरभवत्, ततश्च दुःखम्। विनयेन, राष्ट्रगतेन पश्चात्तापेन च दीप्तान्तःकरणैरस्माभिः कृतपूर्वाणां भ्रान्तीनां संशोधनार्थं, स्वदेशीयान् प्रति प्रयुक्तानां लाञ्छनानां दूरीकरणार्थं, अग्रगत्यर्थं च प्रयत्नपरैर्भवितव्यम्। न वयं पश्चाद्गत्या भविष्याभिमुखं गन्तुं प्रभवामः।

अद्यत्वेऽस्माकं जगदत्यर्थं भिन्नरूपं सञ्जातम्। विकसता यान्त्रिकविवर्तनेन चास्माभिः सामञ्जस्यं विधेयम्। मानवजातेरस्तित्वसम्बन्धिनी समस्या युगेऽस्मिन् सर्वेषां कृते महत्तमः प्रश्नः। ईदृशेऽपि व्यतिकरे स्थितिरियमस्मानेकेन नैतिकपदक्षेपेण मानवेतिहासस्य नवीनभूमिं प्रवेष्टुं महान्तं सुयोगं वितरति। नायं तथा स्वातंत्र्यस्य अधीनताया वा प्रश्नः, यथायमस्माकं सभ्यतायाः स्थितेर्विलयस्यच। सर्वे वयं जीवनायस्पृहयामः। अतश्च जीवनस्य शुचितायां विश्वासो दृढीकर्तव्यः। विश्वासोऽयमस्मासु मानसप्रत्यूहान् नैतिकीं जडतां चापसारयितुं शक्तिं सञ्चारयिष्यति। विश्वस्य संरक्षणात् स्वराष्ट्रसं रक्षणं नास्माभिरधिकं मन्तव्यम्। सर्वशक्तिमतो निरपेक्षस्य राष्ट्रशासनस्य भावना कालात्ययदोषदुष्टा सञ्जाता। सर्वेषां राष्ट्रस्वार्थानां मूलीभूताः काश्चन धर्ममर्यादाः, कामभावनाश्च सन्ति, या निखिलाया मानवजातेः सामान्यतोऽभीष्टाः। सर्वे खलु मनुष्या जीवितुं वाञ्छन्ति। अतश्च सर्वं एव जीवनार्थं अवश्योपयोगीनि वस्तूनि कामयन्ते। सर्वं एवैते सुष्ठु जीवितुं वाञ्छन्ति।

केषाञ्चन आदर्शानां दार्शनिकप्रत्ययानां नैतिकसिद्धान्तानां राजनीतिकसद्भावानां चापेक्षा तेषां सर्वेषां भवत्येव। जीवनं सार्थकं कर्तुं नितरामावश्यकानामुपयोगिवस्तूनाम्, आदर्शानां च सहैव भोगः सर्वैर्मनुष्यैः कर्तुं शक्यः। विज्ञानयन्त्रविद्ययोरद्भुतफलैः सर्वेषां मनुष्याणां निर्बाधस्यसञ्जीवनस्य व्यवस्था शक्यसम्पादा। सर्वे मनुष्या राजनीतिकावश्यकतायाः, आर्थिकदासतायाः, सामाजिकवैषम्याच्च मोचयितुं शक्यन्ते। आदर्शानां काम्यवस्तूनां च समानायां भित्तौ कस्यचिद् विश्वसमाजस्य निर्माणमस्माभिः

कर्तुं शक्यते । तादृशः समाजः राष्ट्रमर्यादानां संरक्षणं विश्वस्य च निरापत्तां विधास्यति। नैतिकी भावना यद्यस्माकं राष्ट्रियं विश्वगतमाचारं नानुप्राणयेत्तर्हि भविष्ये महाभयं स्यात् ।



## ३४. "कालो ह्ययं निरवधिर्विपुला च पृथ्वी"

विचित्रः प्रभावो हि कालदेवस्य। परिवर्त्तनमेवास्य मुख्यविधानम्। पुरेयं पृथिवी सूर्यवदग्निगोलक आसीत्। कालवशेन तस्यां शीतलीभूतायामापः तस्याः पादोनं भागं परावृण्वन्। तस्याश्चतुर्थांशस्स्थण्डिलं वनस्पतिद्विपदचतुष्पदपक्षिहीनमेवाभूत्। त्रिभागस्थितसमुद्रस्य गर्भेऽत्यन्तलघुतृणानामुत्पत्तिरभूत्। लघुतृणात् विशालतृणानां क्षुद्रजीवानाञ्च प्रादुर्भावः, ततो वनस्पतेः सकलजीवानां मत्स्यमकरपशुपक्षिवानरादीनामुत्पत्तिरभूत्। चिरकाले गते ते वानराः पुच्छविहीनत्वं प्रापुः। इत्थं स्पष्टमिदं यन्मनुष्याणां पूर्वजाः प्रारम्भे वानरा एवासन्। कियान् काल एषु परिवर्तनेषु व्यतीत इति संख्यागणनमसम्भवमेव। अवश्यमेवास्मिन्निरवधिकाले किम्भूतं भविष्यति वेति सम्यग्ज्ञातुं न शक्यते।

पृथिव्याः परिमाणज्ञानमस्याः सम्यक्परीक्षा चाशक्यसम्पादे। नदीनिर्झरसमुद्रावृता, पर्वतारण्यवनकुञ्जैः समलंकृता, हिमतुषारघनमण्डलैः सुविभूषिता नानारहस्यैः परिपूर्णा सा नास्ति सम्यक् परिचययोग्या। न सम्यग् जानीमहे वयमधुनापि कथं निर्वृक्षदेशवासिनः (टुंड्रावासिनः), मरुस्थलालङ्कारभूतजनाः, भारतवर्षेऽपि मध्यप्रदेशनिवासिनः संथालप्रमुखा वन्यजना जीवननिर्वाहं कुर्वन्ति, के च तेषां दर्शनविषयाः, कीदृशी वा तेषां ज्ञानपिपासा। सम्प्राप्तज्ञानास्ते कालिदासं भवभूतेरथवा भवभूतिं कालिदासादधिकं मंस्यन्ते इति विमर्शार्हा विषयाः।

ग्राम्याः 'काव्येषु नाटकं रम्यं' प्रतिपादयन्ति न वेति न जानीमहे अहिंसा परमो धर्मोऽधर्मो वेति प्रश्नस्योत्तरं विविधमेधंभूतं भविष्यति च।

विद्वन्नक्षत्रकुलभास्करः 'सुकरातः' विषप्रयोगेण हतः। वाइविलस्य विरोधकर्त्ता, पृथिव्या गोलत्वसाधकः सत्यसमक्षं प्राणान् तृणवन्मन्ता 'जिआर डैनो ब्रूनो' वलीकृतः। स्वतन्त्रता-देव्याः परमोपासकः महात्मा गान्धिः महोदयो गुलिकाक्षेपेण हतः। ननु इह लोके प्रायो दुश्चरित्राणामेव महत्त्वं वर्तते सज्जनास्तु पश्चाद्वर्तिनः सन्तीति विमृश्य लोकहितेभ्यो वंचिताः क्रियन्ते।

निस्सन्देहमिह जगति ते एव पूजिताः सन्ति, येषां सदाचारेण, सत्यव्रतेन, लोकहितेन च वयमुन्नतिमुखा भवामः। प्रायः स्वकाले कस्यापि महात्मन उपयोगिवस्तूनां वा महत्त्वं लोको न स्वीकरोतु, परन्तु कालगत्या वास्तविकगुणानां चमत्कारः प्रकटीभविष्यत्येव। इत्थमवधार्यं गुणान्विताः काकालोचनायाः कुक्कुरशव्दादुलूकानां घूत्कारवादाद्वा भीता निजप्रयत्ने मा शिथिलीभवन्तु। दुष्टानामेवं गतिरनिवार्या।

बहवो जनाः स्वकीयैश्वर्यैः स्वजीवनकालेऽधिष्ठितपदा एव समाद्रियन्ते। तेषां क्वचिद्वुद्धिर्जायते, यत् सर्वथा योग्या वयं जनादरस्य। न ते स्वीयान्दोषान् गणयन्ति, तान् मार्जितुं वा यतन्ते। ते जना उपर्युक्तसूक्तेस्तात्पर्यं गृह्णन्तु। कालान्तरे यदा तेषां पदविहितमैश्वर्यं नश्यति, तदा तेऽचिरमेव जनानामाक्षेपपात्रं भवन्ति। इत्थं विचार्योच्चपदस्य प्रभावमस्थायिनं मत्वा मा ते पद-प्रमत्ता भवन्तु।

कालस्य सर्वस्वहारिणीं गतिं प्रतिपादयता कल्हणेन राजतरंगिण्यां निगदितम्—

ह्यः पश्यद्भिरकारणस्मितसितं पाथोजकोशाकृति
श्मश्रूभेदकठोरमद्य रभसादुत्तप्तताम्रप्रभम् ॥
प्रातर्जीर्णविलक्षकेशविकृतं वृद्धाजशीर्षोपमम्
वक्त्रं न परिहस्यते ध्रुवमिदं भूतैश्चिरस्थायिभिः ॥

पुरा कालस्य निरवधित्वमथ च विपुलायाः पृथिव्या अपि बहिः विष्णु-लोकादीन् प्रदर्शयन्त ऋषयो मानवान् धार्मिकान् विहितवन्त इति पौराणिकी योजना प्रजासु सत्प्रवृत्तिविधायिनी संववृधे। कस्यचिन्महाकवेरधोलिखितोक्तिः समर्थयत्येव प्रतिपादनीयं—

नादौ किञ्चिद्भवति नियतं यच्च पश्चान्न किञ्चित्
मध्येऽकस्मात् सपदि घटयन् सौस्थ्यदौस्थ्यानुरोधम्।
निःशीर्षाङ्घ्रिर्नट इव मुहुः कोऽपि जन्तुर्नटित्वा
नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति ॥

'वर्त्तमान-जीवनमस्माकं स्वत्वस्येयत्तां न परिच्छिनत्ति' इति सूक्त्यानया स्पष्टमेवैतत्सर्वम्। अनेक जीवनैर्व्यक्तेः पूर्णतमो विकासः सम्पादनीयः। अतो यत्किञ्चिदस्माकं प्रियतममभीष्टं स्यात्, तदधिगन्तुं सततं शनैः सोत्साहमुपक्रमः स्वीकरणीयः। वर्त्तमाने जीवने यदि स्वल्पैव सिद्धिर्लभ्येत, तर्हि नास्तीदं नैराश्यकारणम्। यत् किञ्चिदस्मिन् जीवने सिद्धम्, ततः परं भाविजीवने प्रयत्नेन प्राप्यमिति निश्चित्य

निरन्तरमभ्युदय-पथ-प्रयाणं संचरणीयम्। नातः परमुत्साहवर्धकं भविष्यति यत्—

'कालो ह्ययं निरवधिः' इति



## ३५. 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः'

केवलं सतामेवान्तःकरणप्रवृत्तयः प्रमाणम्, नान्येषाम्। तदेव समर्थितं श्रीहर्षेण—

सतां हि चेतः शुचितात्मसाक्षिका।

को विशेषः सतामन्तःकरणस्य ? दर्पण इव भवति सतामन्तः करणम्। सन्देहावसरे तस्मिन् दर्पणवदन्तःकरणे वस्तुवृत्तस्य प्रतिफलनं भवति।

'कथमियं शक्तिः सतामन्तः करणे जायते' इत्यस्मिन् प्रसङ्गे सतां वैशिष्ट्यमनुसन्धेयम्। सन्तस्तु केचनासाधारणाः पुरुषा भवन्तीति कविभिस्तेषां विशेषाः पौनःपुन्येन स्पष्टीकृताः। तथा हि—

उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः।
एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये।
छायां कुर्वन्ति चान्यस्य तापं तिष्ठन्ति वातपे।
फलन्ति च परार्थाय पादपा इव सज्जनाः॥
प्रत्यक्षे च परोक्षे च सन्तो हि समवृत्तिकाः।
करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः॥

उपकारशीलत्वात्, समवृत्तित्वात्, करुणत्वाच्च सतामन्तः-करणे सा शक्तिः प्रादुर्भवति यया सन्देहपदेषु वस्तुवृत्तस्य तत्र विवेको समुद्भवति।

न ते सन्तो वास्तविकदृष्ट्या बहुसंख्यकाः यथा भर्तृहरिः प्रमाणयति—

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्यनित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥

इमे सन्तोऽल्पसंख्यका अपि स्वगुणश्रेणीभिर्नगाधिराज इव राजन्ते सदेवाभिलक्ष्य प्रमाणितं केनापि सुकविना—

सद्भिरध्युषिता धात्री सम्पूज्यते किमद्भुतम्।
कालायसो हि कल्याणं कल्पते रसयोगतः॥

एतादृशां सतामन्तःकरणेऽसत्यस्य प्रवेशो न भवितुमर्हतीति प्रकटितं केनापि मनीषिणा—

सतां पुनः गुणवत्सन्निधिरेव सन्निधिः।

अयं स निधिः यस्य सान्निध्यं प्रतिपादितं कालिदासेन—

'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः'

इति निश्चप्रचम्।

अनवधिरयं ज्ञानोदधिः। जीवनपर्यन्तं सततपरिश्रमेणापि कश्चित्पुरुषो ज्ञानलवदुर्विदग्ध एव भवति। अगणितानि वस्तूनि वर्तन्ते इह जगति। तेषामेकस्यापि अणोरसंख्यविशेषाः सन्ति। इत्थं तस्याणोः सम्यगवगतिरसम्भवैव। प्रकटमिदं यत् सन्देहास्पदं सर्वङ्खलु जगति मनुष्यस्य। एवं सन्देहपूर्णेऽपि जगतो व्यापारे न हि सज्जना विरमन्ति स्वकार्यात्। तेषामन्तःकरणप्रवृत्तय एव सन्देहनिवारणायालम्। उचितमेवान्तःकरणप्रवृत्तेः महत्त्वम्। कदापि न सतां प्रवृत्तिरधमा भवति। सततं विपुल-

विशुद्धकार्यावलिसंयुक्तमानसाः सन्तो लोकहितायात्मकल्याणाय च चिन्तयन्ति।

प्रायः सन्देहनिवारणार्थं गुरूणां शास्त्राणां वा महत्युपयोगिता वर्तते। किन्तु न हि तेषां सर्वदा सर्वत्र च सुलभत्वम्। गुरूणां ज्ञानमपि परिमितमेव। शास्त्राणां विभिन्नत्वं महती बाधैव सन्देहनिवारणदिशायाम्। सतां विमर्शार्हा विषया उत्कृष्टाभिप्रायं प्रत्युद्दिष्टा भवन्ति। तेषां सन्देहास्पदं वस्तु जगत्कल्याणाय भवति। स्वच्छान्तःकरणं तेषां सर्वदोत्तममार्गे प्रधावति। कदापि जगतो द्वन्द्वमयी समस्या तेषां हृदये स्थानं न लभते। अन्तःकरणं तेषां स्वच्छवृत्त्या ब्रह्मानन्दरसे निमग्नं भवति। यतः सततं सत्यं शिवं सुन्दरञ्च रूपं सर्वेषां वस्तूनां तेषां समक्षं वर्तते। इह जगति केवलमविशुद्धचरितानां 'नरपामराणां प्रवृत्तिः पापमार्गे भवति, यतस्तेषां दृष्टिः पापप्रच्छन्ना सती कदापि सत्यस्य दर्शनं न करोति। ननु सज्जनानां प्रवृत्तिः सततं सत्यानुगामिनी सती सन्देहपदेषु वस्तुष्वपि अवितथमेव प्रसरति। तदेव शुद्धं यस्मिन् तेषां प्रवृत्तिर्भवति।

कस्यापि मनुष्यस्य प्रामाणिकदृष्टयै तस्य स्वार्थहीनत्वमत्यावश्यकं यतः स्वार्थेन सह प्रमादान्धत्वं विराजते। निस्वार्थी जना ईश्वरस्य परमविभूतिं हृदये दधतः तस्यैव कृपया सत्यान्तर्दृष्टिभाजो भवन्ति। यथा हि गीतायां कृष्णोऽर्जुनमुपदिशति—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥

पापशीलानामन्तःकरणं पापकालिम्ना तावत् कृष्णं भवति यावदीश्वरादेशानां प्रभावः तत्र न दृश्यते। सतां हृदये

ईश्वरेच्छायाः प्रतिबिम्बः प्रकटितो भवति, यतः पवित्रभावनया शुद्धमार्गं ते परिजानन्ति। अर्जुनोऽपि कृष्णं प्रति स्वमोहविनाशात् आत्मानं सन्देहपारङ्गतं कथयति गीतायाम्—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत !
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥
किं कर्म किमकर्मेति कवयोप्यत्र मोहिताः।

सुप्रसिद्धाङ्ग्लनाटककार-शेक्सपीयररचिते 'हैमलेट' नाटके डेनमार्कदेशवासिनः हैमलेटस्य पितृव्यः तस्य पितरं राजानं हत्वा स्वयं सिंहासनमारुरोह। हैमलेटस्य सन्देहविषयोऽभूत् यदहं पापशीलं पितृव्यं हत्वा पुत्रधर्मानुसारं पितुः ऋणान्मुक्तो भवेयमथवा पितृव्यं प्रति दयां कुर्यामिति। इमं मोहं सम्प्राप्तो हमलेट ईश्वरप्रतिनिधिकृष्णवन्मार्गदर्शकमप्राप्य प्रमत्तोऽभूत्। इत्थमीश्वरकृपयैव सन्देहस्य निवारणं सम्भवति।

महात्मा गान्धिमहोदयोऽपि तर्कबुद्धचा सन्देहपदेषु वस्तुषु निर्णयमप्राप्यान्तःकरणप्रवृत्तिमेव सर्वोत्कृष्टपथिप्रदर्शिकां मन्यतेस्म। स हि अन्तःकरणमीश्वरेण सह योजयित्वेश्वरसन्देशं तत्सम्बन्धेन प्राप्नोतिस्म। कठिन एव कर्त्तव्याकर्त्तव्ययोर्निर्णयो जगति। पवित्रान्तःकरणप्रवृत्तिरेव सुलभा प्रामाणिकनिश्चयाय।

## ३६. "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः"

तेजसां हि न वयः समीक्ष्यते।

प्रायो जनाः स्वप्रतिष्ठायै यतमाना दृश्यन्ते। लिङ्गविशेषेण वयस आधिक्येन वा पूजार्हत्वं प्राप्तव्यमिति भ्रममात्रमेव। इह जगति बालो वृद्धो वा पुरुषस्स्त्री वा सममेवास्माकं पूजायाः पात्रमस्ति इति विगतसन्देहम्। कस्यापि पूजा स्त्रीत्वेन पुरुषत्वेनैव वा केवलं न भवति। स्त्रीषु प्राप्तमहायशाः अहिल्याबाई लोकातिगगौरवान्विता लक्ष्मीबाई वा कदापि भारतदेशे कस्मादपि पुरुषान्न्यूनं पूज्यत्वन्न प्राप्तवती। कामपि स्त्रीं ज्ञात्वा गुणविहीनामपि केवलमल्पमतयस्तस्याः पूजां कुर्वन्ति। तस्या उपासका रूपेणाकृष्टहृदया मूर्खा नरके यान्ति। गुणस्तु शाश्वतो नित्यस्सनातनश्च। यथा स्वर्णवान् वस्तूनि बहूनि क्रीणाति, तथैव गुणवान् पुरुषो जनानामादरपात्रं भवति प्रकृत्या न हि कदाप्यन्यथा।

वृद्धोऽयं वृद्धोऽयमिति कथयन्तो बहवः पुरुषाः सकलकलासर्वगुणातिविहीनमपि तं पूजयन्ति। नौचित्यं खलु तेषां पूजायां यतो नास्ति केवलं वृद्धत्वे किञ्चिदपि पूजार्हम्। पूर्वजन्मसंस्कारप्राप्तबहुगुणान् बालकानपि महर्षयः पूजयन्ति। बालकं राममृषयस्सर्वे पूजितवन्त आदरभावैः। ध्रुवस्तु सर्वेषामृषीणामादरपात्रमभूत्। स्वधर्मरक्षकौ क्षत्रियबालकौ द्वौ

कोटभित्तौ इष्टकासु निविष्टौ किन्नार्हतः पूजाम्। अभिमन्यु-कथा बालकानामपि शूराणां पूज्यत्वं प्रतिपादयति। पण्डितस्याष्टावक्रस्य बालत्वमपि तस्य पूज्यत्वं समधिकं करोति।

न हि वृद्धास्स्त्रियश्च कदाप्युपेक्षणीया निर्गुणत्वात्। स्पष्टमिदं यत् ता अबला असहायाश्च सततमस्माकं साहाय्येनैव जीवनं धारयितुं समर्थाः। वृद्धास्तु पितृवत् आदरणीयाः। शीघ्रमेव संसारात्संसृत्य स्वर्लोकं गमिष्यन्ति ते। तेषामनुभवैः वयमिह जगति सपदि अग्रसरा भवामः। नार्यस्तु जगतो मातरः। 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।' गुणविहीना अपि नार्यो नावमन्तव्याः। बहुधा गृहमेव तासां यात्रासीमा, पतिदेवस्योपदेश एव ज्ञानसमृद्धिः, निजगृहव्यक्तीनां सेवैव सेवाधर्मश्च। कथं ता अधिकतरं गुणवत्यः भवितुं शक्नुवन्ति। अतः नारीविषये पूजार्हत्वनियमे वयं किञ्चिच्छिथिला भवेम।

आदर-निर्धारणे लिङ्गस्य भावना देवीनां माहात्म्यं विचार्यापि परिहेया भवति। ज्ञानस्याधिष्ठात्री सरस्वती, श्रियोधिष्ठात्री लक्ष्मी, शक्तेरधिष्ठात्री दुर्गा च औदात्त्यबलेन स्त्रीणां कल्पितदोषं सर्वथा दूरीकुर्वन्ति। न कदापि तासां देवीनां महत्त्वं स्त्रीलिङ्गेन क्षीयते। मातृदेवो भवेति शिक्षोपनिषदां स्त्रीणां गौरवाय भवति।

भारतीयेतिहासो बहूनां स्त्रीरत्नानां गौरवगाथाभिः पवित्रो वर्तते। सीता-द्रौपदी-गान्धारी-सुदक्षिणा-दमयन्तीनां राज्ञीनां माहात्म्यं कस्याविदितम्? राजतरङ्गिण्यां कल्हणः सूर्यमती-रट्टा-रड्डा-रत्नादीनां राज्ञीनां महद्गौरवमगायत्। तद्यथा रट्टामधिकृत्य—

विन्ध्याद्रिमार्गाः पर्याप्ता निष्पर्यन्तप्रभावया।
दुर्गयेव तया देव्या कृता निहतकण्टकाः॥

सिन्धुप्रदेशस्य महाराजो दाहरो यदा अरबदेशीयः आक्रमणकारिभिः सह युध्यमानो मारितः तदा तस्य राज्ञी स्वयं सैन्यनेतृत्वं चकार। मध्यदेशस्य मध्यकालीना राज्ञी दुर्गावती ससैन्यं मुस्लिमाक्रमणकारिभिः सहायुध्यत। आधुनिकयुगेऽपि कमलानेहरू, सरोजिनीनायडू, विजयालक्ष्मीति विख्यातानां नारीरत्नानां प्रकृष्टोद्यमैः स्वराज्यसम्पत्तिः प्राप्ता।

गुणसम्पन्नोऽयं जन इति मत्वा तस्योत्कृष्टतयाभिभूताः प्रकृत्या वयं नतमस्तकाः तस्यादरं कुर्मः। नहि धनेन महाप्रभावेण बलेन वा भवति कोऽपि पूज्यः। निसंशयं भौतिकविभूतिविहीनोऽपि कश्चित् पुरुषो भवेदस्माकमादरपात्रमात्मनः स्वभावमाधुर्येण त्यागेन, लोकसंग्रहेण, त्रिविधतापदहमानान् प्राणधारिणः प्रति हितेच्छया वा। स हि भवति समादरणीयः, यो निजकार्यैरुपदेशैर्वास्मानवनतिगर्तादुद्धरेत्। एते गुणा बालके, वृद्धे, युवके वा स्त्रियां पुरुषे वा समानरूपेण पूजास्थानं भवन्ति। पूज्या नाम ते सन्ति यैः सदृशा वयं भवितुमिच्छामो लौकिकपारलौकिकसुखाय वाभ्युन्नतये वा। बालको ध्रुवः, युवको रामः, वृद्धो बुद्धः, स्त्रीषु च सीता वा सावित्री वा एतैर्गुणैरद्यापि गुणग्राहकाणां हृदयेऽङ्कितप्रभावाः सन्ति नाम।

भारते तु बालकानां ज्ञानवार्धक्यस्य सम्भावनयैव 'योऽनूचानः स नो महान्' इति सत्यं शाश्वतं प्रतिष्ठितम्।

●

## ३७. विश्वशान्तेरुपायाः

परस्परविप्रतिसिद्धमिवेदं वचः शान्तिः जीवनञ्चेति। जीवनं हि नामानारतं महानाजन्मनः सङ्घर्षः। कथंकारमिदं सर्वकार्योपशमरूपया शान्त्या सामानाधिकरण्यमियात्? को नु वा शक्नुयाज्जन्तुर्नैसर्गिकीमात्मनो राजसीं प्रवृत्तिं प्रहातुं या ह्येनमश्रान्तं प्रेरयत्येव यत्किञ्चित्कर्म कर्तुम्, अन्ततः सुषुप्त्यादावपि निश्श्वासोच्छ्वासरूपम्। यदाहुः "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति। प्रायश्चैकेनात्मनो जीवननिर्वाहाय क्रियमाणं कर्मान्येषां जन्तूनां केषाञ्चित् हिंसाकरमपि भवेत्। उच्यते हि—

अहस्तानि सहस्तानामपदानि चतुष्पदाम्।<br>
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम्॥

तदेवं प्रतीमः, अशान्तिरेव प्रकृतिसिद्धाऽस्मिन् लोके शान्तेरिति। यदेवोच्यते उक्तिवैचित्र्यात् कवि-कुलतिलकेन—

"मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः।"

मानवस्यायमेव विशेषः शिष्टाया जन्तुततेः यदयमिमां स्वाभाविकीं समूलमुन्मूलयितुञ्चाशक्यामप्यशान्तिं यथाकथञ्चिदल्पतरां कर्तुमहर्निशं प्रयतते। अतिप्राचीनेषु वैदिकवाङ्मयादिषूपलक्ष्यमाणेयं शान्ति-सम्पिपादयिषा सूचयति,

कियती वा अशान्तेः स्वाभाविकी शक्तिः, कियती च वाऽस्या लोकानां भीतिरिति।

मानवशास्त्रज्ञा अभिप्रयन्ति—पुरा किल मानवोऽप्यन्येषां वन्यमृगाणां प्रवृत्तिमनुसरन् तथैव जीवितं हिंसावहुलं यापयति स्म। गच्छता च कालेनाऽयं भगवत्प्रसादविशेषमात्मनो बुद्धिमुपभुञ्जानः किञ्चित् किञ्चिदिव स्वीयं सुखं वर्धयितुमारेभे। प्रथमतोऽसौ सङ्घम्, ततो ग्रामम्, ततो नगरमित्यादीन्नैकानुन्नतिहेतून्निर्मिमाणः प्राणि-व्रातेऽस्मिन् अधिकृतिमुपलेभे। कारणञ्चात्रैका धीशक्तिरेवानितरसाधारणी मानवस्येति निश्चितमेवेदम्। परन्तु यथेयं धीशक्तिः मानवाय सर्वेभ्योप्युन्नतिं प्रायच्छत् तथैवासावस्मै प्राण्यन्तरा साधारणान् दोषानपि ददौ, येनामुना सम्पादितेयं सर्वापि समुन्नतिः अवनतिरूपैव प्रतिभाति क्वचित्।

प्रायः सर्वेष्वपि तिर्यक्षु द्वावेव दोषावुपलक्ष्येते, कामः क्रोधश्चेति। दृश्यते ह्येषामशनाया-पिपासादिवशात् कामः, तत्प्रतीघातात् कारणान्तरतो वा क्रोधश्च। परन्तु नैवैतेषु पश्यामः लोभमोहमदमात्सर्यादीन्। एते हि पण्डितंमन्यस्य मानवस्यैव असाधारणी पैतृकी सम्पत्तिः। द्वावपीमौ कामक्रोधावतीव बलवन्तौ विनाशहेतू चेति सोपपत्तिकं प्रतिपाद्यते गीतासु—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥

इत्यर्जुनेन पृष्टः श्रीकृष्णः प्रत्युवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥

यद्येवमेतावाननर्थः कामक्रोधमात्रतः, का कथा कामादिषट्क-कृतस्येति मनसैव केवलमभ्यूह्यम्। तदेवमान्तरेणारिषट्केन विकलीकृतमानसोऽयं मानवः तिरश्चोप्यवाङ्मुखं निपतन्त-मात्मानमजानानः स्वेनैव निर्मितामुन्नतिमपनिनीषति। जीवनञ्चात्मनः वन्यादपि जघन्यमापादयति। स्वोन्नत्येक-परायणश्चासौ स्वीयानेव द्वेष्टि, द्विष्यते च तैः, परन्यग्-भावेन चात्मनः समुन्नतिं सम्पादयितुं समीहते। तदर्थञ्च नैकानुपायान् युद्धादीनादित्सते।

युद्धञ्च नाम बलादन्तर्नियमितायाः पाशविकतायाः प्रवृत्तेः तदा तदा बहिस्समुज्जृम्भणमेव। अस्य च प्रचुरतरः प्रचारः बहोः कालात् परिदृश्यते सर्वेष्वपि देशेषु। राज्यान्तराणामास्कन्दनम्, धनस्य महतो लुण्ठनम्, आत्मौन्नत्यस्य स्थापनञ्चेत्यादि—निमित्तीकृत्य क्रियमाणमेतद्युद्धं समर्थयितुमपि नैकधा प्रयत्यते शास्त्रकारैरपि। बहवो ह्येते राज्यान्यल्पानि दुर्बलानि विजित्य साम्राज्यस्थापनमिदं सम्राजः प्रथमं कर्तव्यमुपदिशन्तः दिग्विजय इत्यादिभी रुचिरैः नामभिः एतादृशीं प्रवृत्तिं प्रशंसन्तो लक्ष्यन्ते, परन्तु सूक्ष्मेक्षिकया जानीमः स्थितस्यैतत् समर्थनमात्रमिति। यतः का वा क्षतिः यदि महत् साम्राज्यं न स्थाप्यते नैकमारणेन, यदि च सर्वाः प्रजाः सुखेन वसेयुः नाति महत्यपि राज्ये। अन्याय-प्रवृत्तस्य तु रिपोरवस्कन्दनं धर्म्यं कर्तव्यमेव चेत्य-न्यदेतत्। यदेवोद्दिश्योच्यते भगवता श्रीकृष्णेन "धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते" इति। अतएव नैके धीमन्तो युद्धमेतन्निरोद्धं बहुधा कृतयत्नाः श्रूयन्ते। पुरा किल सार्वभौमोऽशोकः स्वयं-वीक्षितयुद्धजन्यदोषः समरं सर्वथाऽपाकर्तुं

प्रायतत, तदर्थञ्चाहिंसादीनां धर्माणां प्रचुरं प्रचारं कर्तुमारेभे।

युद्धमिदं कियत्या वा अशान्तेर्मूलमिति सर्वविदितमेवेदम्, विशेषतश्चास्मिन् काले। पुरापि नैके राजानः सर्वदा मिथो युद्धयमानाः श्रूयन्ते। परन्तु पुरा युद्धे धृतशस्त्राणां साक्षात् युध्यमानानामेव वीराणां नाशोऽभवत्। यदा किल नैकानि सैन्यानि युद्धस्थाने गच्छन्ति स्म तदा पार्श्वत एव कर्षको विना कञ्चिदप्युद्वेगमात्मनः क्षेत्रमकर्षत्। अन्ये च पौराः तानि सैन्यानि साश्चर्यं सानन्दमिव चारात् पश्यन्तः स्वस्वकार्याणि यथापूर्वमकुर्वन्। इयमेव च रीतिरासीदस्माकं देशे यावद्विदेशीयाः प्रधानतया च महम्मदीयाः देशमिमं नाचक्रमुः। ते किल न केवलं प्रतिपक्षसैन्यमेव, अदोषानपि पौरान्, बहुधा हिंसन्तः हस्तोपगतं सर्वमपि अलूलुटन्। तदेवं ज्ञायते युद्धस्य विप्लवहेतुता बहुधा ववृधे कालक्रमेणेति।

अद्यत्वे चास्योपप्लवस्य सहस्रगुणं शतसहस्रगुणं वा वृद्धिरुपलक्ष्यते। भौतिक-विज्ञानस्य हि महिम्नाऽद्य तादृशान्यस्त्राणि निर्मीयन्ते, येषां प्रयोगो निमेषमात्रेण सर्वमपि जगदिदं भस्मसात् कुर्यात्। न केवलं युद्ध-प्रवृत्ता एव, सर्वेऽप्यन्ये देशा विनश्येयुः। तदेवं खण्डप्रलयोऽयं कदा वा हठादापतेदिति भयविभ्रान्तैः स्थीयतेऽद्य सर्वैः।

तादृशञ्च भयमपाकर्तुं नैके उपाया अभ्यूह्यन्ते विधीयन्ते च धीमद्भिः। प्रथम-महासङ्ग्रामस्यान्ते राष्ट्रसङ्घ इति नाम्ना (League of Nations) कश्चन सङ्घो निरमायि, येन युद्धानि निरोद्धुं प्रायत्यत। परन्तु सोऽयं सङ्घोऽकिञ्चित्कर एवाम्रियत।

भीषास्माद्वातः पवते भीषोदेति सूर्यः

इति न्यायेन सर्वोऽपि खलु भयप्रदर्शनेनैव, अर्थात् दण्डभयेनैव नियन्तुं शक्येत लोके। "दण्डेन गौर्गर्दभः" इति हि वदतो भर्तृहरेर्वचः प्रायो गोगर्दभादिभ्यो नातिभिन्नप्रवृत्तीनां जनानामपि विषये साधीय एव। राष्ट्रसङ्घश्चासौ तादृशो दण्डशक्तिविहीनः निष्फलयत्न एवाभवत् द्वितीय महासङ्ग्रामवारणे।

द्वितीयसङ्ग्रामान्ते चाणविकास्त्रप्रयोगजं महान्तं लोकक्षयं स्वयं प्रत्यक्षीकुर्वद्भिः कैश्चिद् धीमद्भिः कश्चन अपरः सङ्घः निरमायि 'मित्रराज्यसमिति-नाम्ना'। सङ्घे चाऽस्मिन् पूर्वसङ्घीयानि स्खलनान्यपाकर्तुं यथाशक्ति प्रायत्यत। न केवलं युद्धस्यैव तद्धेतूनां दरिद्रतादीनामपि निर्मूलनार्थं नैकधाऽनेन प्रयत्यते। परन्तु समितेरस्याः स्थापने हेतुः श्मशानवैराग्यं यथा-यथा कालेन गच्छता दूरी भवति,तथातथा स्वाशयनिर्वाहेऽपि समितेरस्या मान्थर्यमुपलक्ष्यते। नैव च तादृशी श्रद्धा दृश्यते सभ्यदेशीयानां यादृशी प्रथमतोऽभवत्। अभावेऽपि महतो बाह्ययुद्धस्य प्रचलत्येवानन्तरं युद्धं प्रजावादसाम्यवादयोः, वादद्वयेन चानेन द्विधेव विभक्तं सर्वमपि जगत्। उभावपि पक्षौ स्वस्वबलसम्पत्तये अनिशं यतमानौ परस्परं वर्धयतो द्वेषभावम्। एवं स्थिते न किमपि पार्यते कर्तुं समित्या। "अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषाऽऽदरः" इति न्यायेन को नु वा बिभ्यादस्या समितेः बलविहीनायाः। अतश्च शान्त्यर्थं समितेरनुसरणं मृगतृष्णिकानुधावनमेव मन्यन्ते मनीषिणः।

अतः यथाकथञ्चिद्युद्धं रोद्धुं प्रयतितव्यं सर्वैरपि यदि शान्तिरेवैषा समीहिता। बहिस्तावदुभावपि पक्षौ शान्तिमेवा-

भिलषणीयां वदतः कर्मणा पुनरन्यथैव व्यवहरतः। अमेरिका-देशस्तावत् 'नेटो' इत्यादि-सङ्घान् निर्मिमाणः चिकीर्षति साम्यवादसमुन्मूलनम्। रूसदेशश्च वार्शा-सन्धिरित्यादीन् कुर्वन् प्रजातन्त्रं प्रमार्ष्टुमभिलषति। तदेवं यावत् "मनस्यन्य-द्वचस्यन्यत् कर्मण्यन्यत्" इति रीतिरनुस्रियते, कथं वा भवेदेकः द्वितीयस्य विश्वासपात्रम्? अवश्यं शान्तिसंवर्धनेच्छुभिरेतैः तादृशी रीतिः प्रहातव्या। राज्यानां यथातथं रूपमङ्गीकर्तव्यम्। अर्थात् ये ये देशा यं यं वादमनुसरन्ति ते तथैवानुसरेयुः स्वेच्छया विना बाह्यदेशीयानां निर्बन्धम्। प्रजातन्त्रव्याप्त्यै न अमेरिका-देशीयाः प्रयतेरन् न वा साम्यवादव्याप्तये रूसदेशीयाः। यदि यः कोपि देशः चीनवत् उन्मत्ततां प्रदर्शयेत्, तदा सर्वेपि देशा मिलिताः तस्योन्मादस्य चिकित्सां कुर्युः। अर्थात् सैनिकमार्थिकञ्च बलं राष्ट्रसमितेर्वर्धयन्तः तद्द्वारैव दुष्प्रवृत्तान् देशान् दण्डयेयुः। भूतपूर्वप्रधानमन्त्रिणा जवाहरलालेन कृतप्रचारं पञ्चशीलं सम्यक् कार्यरूपेणाऽऽचर्यमाणं विश्वशान्तये महदुपकरोतीति नाऽत्र संशीतिः।

एवं युद्धं सर्वथा निरुन्धन्तः वाणिज्यादिभिश्च परस्पर-मुपकुर्वाणा एव देशा वैज्ञानिकीं वृद्धिं, तत्कृतञ्चानन्दमनुभवेयु-रिति।

## ३८. "अन्नं बहु कुर्वीत"

तैत्तिरीयोपनिषदि आनन्दवल्ल्यामन्नमयादेरानन्दमयान्तस्य कोशपञ्चकस्योपवर्णनं दृश्यते। तत्र च स्थूलतमादन्नमयकोशात् प्राणमयकोशस्य, ततो मनोमयकोशस्य, ततो विज्ञानमयकोशस्य ततश्चानन्दमयकोशस्य क्रमेणान्तरतमत्वं निरूप्य आनन्दमयकोशादप्यान्तरतमं ब्रह्म सत्यज्ञानानन्तलक्षणं पुच्छवत् पुच्छं "सर्वस्याप्यविद्याकल्पितस्य द्वैतस्यावसानभूतम्" प्रतिपद्यते। तस्यामेवोपनिषदि भृगुवल्ल्यामुपवर्ण्यते—भृगुर्वै वारुणिर्वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति। वरुणश्चासौ ब्रह्मोपलब्धौ द्वाराणि अन्न-प्राण-चक्षुः-श्रोत्र-मनोवचांस्युपदिश्य ब्रह्मणो लक्षणमवदत् "तदिदं ब्रह्म यतः सर्वाणि भूतानि जायन्ते, येन चाभिरक्ष्यन्ते यदेव चान्ततोऽभिनिविशन्ति" इति। श्रुतब्रह्मलक्षणश्च भृगुः तपस्यया ब्रह्म ज्ञातुं प्रायतत। प्रथमतश्चासावन्नमेव ब्रह्मेति व्यजानात्। पूर्वोक्तं हि लक्षणमन्नेप्युपपद्यते, अन्नादुद्भूतानां भूतानामन्नेनैव रक्षितानामन्ते अन्न एवानुप्रवेशात्। पुनश्च तपसा ब्रह्मविजिज्ञासस्वेति पित्रानुबोधितो भृगुः अन्नादनन्तरं प्राणं, ततो मनः, ततो विज्ञानम्, अन्ततश्चानन्दं ब्रह्मतया निरचिनोत्। तदेवं ब्रह्मज्ञानद्वारतयोक्तस्य अन्नस्योपासनमपि उपदिश्यते "अन्नं न निन्द्यात्, तद्व्रतम्" इत्यादिना। अतएवाहुः शङ्करभगवत्पादाः—'किञ्चान्नेन द्वारभूतेन ब्रह्म विज्ञातं यस्मात्तस्माद् गुरुमिवाऽन्नं न निन्द्यात्। तदस्यैवं ब्रह्मविदो व्रतमुपदिश्यते। व्रतोपदेशोऽन्नस्तुतये, स्तुति-

भाक्त्वञ्चान्नस्य ब्रह्मोपलब्ध्युपायत्वात्" इति । एतत्प्रसङ्ग एवान्यान्यप्यन्नस्तुतिवाक्यानि श्रूयन्ते "अन्नं न परिचक्षीत, तद्व्रतम्" "अन्नं बहु कुर्वीत तद् व्रतम्" इत्यादीनि। अन्नसञ्चये चातितरां प्रयतितव्यम्, यतो विनाऽन्नसञ्चयात्कथं वा शक्येतावश्यकर्तव्यामतिथिसत्क्रियां निर्वोढुम्, इति चोपदिश्यते भगवत्या श्रुत्या। 'न कञ्चन वसतौ प्रत्याचक्षीत तद् व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्' इत्यादि । व्याख्यायते च भगवत्पादैः "वसतौ वसति-निमित्तं कञ्चन कञ्चिदपि न प्रत्याचक्षीत, वसत्यर्थमागतं न निवारयेदित्यर्थः। वासे च दत्तेऽवश्यं ह्यशनं दातव्यम्। तस्माद्यया कया च विधया येन केन च प्रकारेण बह्वन्नं प्राप्नुयात्। बह्वन्नसङ्ग्रहं कुर्यादित्यर्थः" इति।

एवं भार्गवकथाप्रसङ्गवशेनेयमन्नस्तुतिः ब्रह्मज्ञानद्वारताया हेतोः कृतेति प्रतिपादितम् । परन्तु न केवलं ब्रह्मज्ञानद्वारत्वं, तत्साधनत्वमप्यन्नस्येत्यतोपि ज्ञायते अन्नस्य प्राशस्त्यम् । शरीरधारणहेतोर्ह्यन्नस्य शरीरि-साध्येषु सर्वेष्वपि कार्येषु सुविदितैव नान्तरीयकता । इदमेव सूच्यते कालिदासेन "शरीरमाद्यं खलु धर्मसाधनम्" इति वदता। धर्मपदं चात्रोपलक्षयति शरीरसाध्यं सर्वमपि कार्यजातमिति सिद्धमेवं शरीरधारणहेतोरन्नस्य ब्रह्मज्ञानेपि साधनत्वम्, "नाऽयमात्मा बलहीनेन लभ्यः" इति च वदन्ती श्रुतिर्मनोहृदयबलानामिव शारीरस्यापि बलस्यात्मोपलब्धिसाधनतां निरूपयति यत्किलान्नमात्रैकसाध्यम्। अतएव चाध्यात्मविज्ञानप्रचारणचणस्तत्रभवान् विवेकानन्दः भारतीयानां प्रायः सुदृढायसशरीरतामाशंसानः श्रूयते । यतः शरीरेण द्रढिष्ठेपु केषाञ्चिदेव हृदयेन कदाचित् दुर्बलता सम्भाव्येत।

ये पुनः शरीरेण दुर्बलास्तेषां हृदयदौर्बल्यं नियतमेव। हृदय-दौर्बल्यस्य च सर्वथा प्रहेयता सूच्यत एव भगवता गीताचार्येण "क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप" इत्यर्जुनमुद्‌बोधयता। तदित्थमखिलदौर्बल्यनिदानस्य शरीरदौर्बल्यस्यापाकर्तुः कियद्वा प्राधान्यमन्नस्येति सर्वविदितमेवेदम्।

किमेतावता कृतकृत्याः स्याम वयं यदि केवलमन्नं वहुकुर्वीम। नेत्याह श्रुतिः। सा किलोपदिशति "यथा कया च विधयया वह्वन्नं प्राप्नुयात्" इति बह्वन्नसङ्ग्रहकर्तव्यताम्। अन्नसङ्ग्रहश्च न केवलमन्नस्य वहूकरणेन स्तुत्या वा सुशकः सम्पादयितुम्। "न हि सुप्तस्य सिंहस्य निपतन्ति मुखे मृगाः" इति न्यायेन न खलु शक्यसम्पादं किमपि वस्तु लोके विना प्रयत्नात्। विशेषश्चा-ऽन्नादिकम्। यदि पुनरियं बहूकृतिः परोक्षविधया अन्नसञ्चये उपकुर्वीत, उपकुरुतां नाम। यतोऽसौ बहूकृतिः प्रायः समृद्धान्ने-ष्वाढ्येषूपलक्ष्यमाणमन्नपरिहारमपाकुर्यात्। येन व्यर्थं तैः परि-ह्रियमाणं गोपितं वान्नमन्नातुरेभ्यः उपयुज्येत। तदेवमन्नस्य बहूकृतिः निरर्थकमन्नविनाशं परिहरन्ती तत्सञ्चयार्थं कियच्चि-दुपयुञ्जीत। न खलु तावताऽन्नस्य सङ्ग्रहोऽतितरां वर्धेत। तदर्थञ्चावलम्बनीया अन्ये वहव उपायाः कृषिवाणिज्यादयः। परन्तु वाचामात्रेण सुलभतया भासमानानामप्येषां कार्यरूपेण निर्वहणे कियद्वा काठिन्यमिति तत्प्रवृत्ता एव जानीयुः। अतएव प्रायो धीशालिभिर्निरुह्यमाणानामप्येषां कृष्यादीनां कथं वा वैफल्यं भवति। कथं वा न केवलं भारतीयानाम्, अन्यदेशीयाना-मपि अन्नार्थं परावलम्बनमधुनापि वरीवृत्यते इति अपरोक्षमेवेदम्। विशेषतश्च भारतीयानामन्नमितं पचत्वविषये नैके नैकधा

मन्यन्ते। सद्यो धनलाभार्थं कृषीवलैर्धूमपत्रेक्षुक्षेत्रादिष्वेवाधीयते श्रद्धा, न पुनर्धान्यादिष्विति केचिन्मन्यन्ते। सांघिककर्षणाभाव-मयान्त्रिकतामप्यत्र हेतुं केचिदाशेरते। तत्सत्त्वेपि रूसदेशादिषु अन्नसमृद्धेरभावमुदाहरन्तश्चान्ये जनता-प्रचयमेवाऽत्र कारण-मभिप्रयन्ति। सन्त्येव चाऽन्ये ये सर्वानपि दोषान् शासकानामेव मस्तके प्रक्षिपन्तः कृतकृत्यमात्मानं मन्यन्ते। स्यान्नाम यत्किमपि वाऽत्र कारणम्, परन्तु अन्नसङ्ग्रहस्य तद् बहूकृतेश्चाद्यापि यथापुरं सुमहत्यावश्यकतेति पुनर्निर्विवादमिदम्।

सत्यमिदम्, अपर्याप्तमेवेदमन्नं दृश्यते लोके। न केवलं कृष्यादेर्वर्धनम्, मनुजानां मानसिक्याः प्रवृत्तेः परिवृत्तिरपि नितरामावश्यको उपलक्ष्यतेऽस्य दोषस्य प्रतीकारे। प्रसिद्धोऽस्ति कश्चिदाभाणकः आङ्ग्लभाषायां किमशनार्थमेव जीवेत् किं वा जीवनार्थमश्नीयादिति। विश्वविदितमेवेदं यदद्यत्वे सर्वेऽपि जनाः प्रथममेव पक्षं स्वीकुर्वन्तः सर्वथा आत्मारामा दृश्यन्ते। यया कया च विधया बह्वन्नं प्राप्नुयादिति च श्रुतिमक्षरशः अनु-सरन्ति। परन्तु अयमेव भेदः। श्रुतिरियमातिथेयता-सम्पत्त्यर्थं बह्वन्नसङ्ग्रहमुपदिशति। इमे तु पुनर्महात्मानः "आत्मार्थं पृथिवीं त्यजेत्" इति वाक्यं प्रमाणयन्तः क्षुद्बाधया क्लिश्यतोऽपि नैकान् सजातीयान् कटाक्षेणापि वीक्षितुं नैव समीहन्ते, दुष्पूरञ्चात्मनः कुक्षिमापूरयितुमहर्निशं प्रयतन्ते। एवं स्थिते कियता वाऽन्नेनैव समुत्पादितेन पर्याप्तेन भवितव्यमिति स एव जानीयाद्देवदेवः।

परन्तु नैवैतादृशी प्रवृत्तिः महते अनर्थाय भवेत्, यदि देशे सर्वतोमुखी अन्नसमृद्धिर्दृश्येत। अभावे च तस्याः लोकव्यवहारा-र्थमपि वा सर्वैर्द्वितीयस्य पक्षस्य (जीवनार्थमशनमित्यस्य)

अवलम्बनं श्रेय इति न कोप्यत्र संशयहेतुः। पाश्चात्त्यदेशेषु किलापत्समयेषु महासङ्ग्रामादिषु सर्वेपि पौराः स्वयमेवावश्यकवस्तूनां सङ्ग्रहं तावदेव कुर्वन्ति यावता प्राणान् धारयितुं शक्येत, देशरक्षाद्यर्थमेव च प्रयतन्ते सानन्दमिति शृणुमः। भारतस्यापि तदैव महती समुन्नतिः सम्भाव्येत, यदा तादृशी नियमश्रद्धां शते पञ्चाशद् वा भारतीया अभ्यसेयुः, येन सजातीयैरन्यैरपि अन्नादीनि आवश्यकवस्तूनि लभ्येरन्।

सर्वे च वयमस्मत्पूर्वैरुत्तमधर्मतयाऽभ्यर्हितां अस्माभिश्च विस्मृतप्रायामातिथेयतां अनुसरेम। यतः "तद्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः" इत्यादि गीतावाक्यमाधिभौतिकपरतया "आतुरेभ्योऽदानानोऽन्नं यो भुङ्क्ते स्तेन एव सः" इत्यपि वक्तुं शक्यते। अतएव च समुपलभ्यन्ते बहूनि वचनानि "एकः स्वादु न भुञ्जीत" इत्यादीनि। अतिथ्यातुरादिभ्योऽन्नदान-प्रस्तावे चाह मनुः—

"अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥"

"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्" इत्यादि च। तदिदं सिद्धं न केवलमात्मार्थं परार्थमपि वहुकुर्वीतान्नमिति।

धनस्य सर्वोत्तमोऽयमुपयोगोऽन्नस्य संवर्धनमेव। तथा हि—

धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात्।
निक्षिप्तं हि मुखे रत्नं न कुर्यात् प्राणधारणम्॥

•

## ३९. वाक्यं रसात्मकं काव्यम्

काव्यं नाम कवयितुरपूर्वः कोऽपि मानसः सृष्टिविशेषः, यो हि लोकोत्तर-सामग्र्यादिवशादतितरामतिशेते विधातुः सृष्टिम्। अत एवाहालङ्कारिकशिरोमणिः मम्मटभट्टः—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥

किं वास्य प्रयोजनं काव्यस्येति विचिकित्सन्तः सर्वेप्यालङ्कारिकाः प्रायो विप्रतिपद्यमाना अप्यस्य उपदेशसाधनत्वादिविषये ऐककण्ठ्येनाङ्गीकुर्वन्त्यानन्दसन्धायकं काव्यमिति। परन्तु को नु वायं काव्ये विशिष्टो धर्मः योऽमुमानन्दमपूर्वं जनयतीति। अत्र पुनस्ते बहुधा विप्रतिपद्यन्ते। यतः यान्येव कालिदासादीनां काव्यान्यत्युत्तमतया अङ्गीक्रियन्ते एकशाखैः आलङ्कारिकैः, प्रायः तान्येव किल तथात्वेनाङ्गीक्रियन्ते शाखान्तरीयैरपि। अतश्चेदं सिद्धं भवति यत्सौन्दर्याधायक एवांशे एषां विप्रतिपत्तिः, न पुनः सौन्दर्यसत्तायामिति।

तत्र काव्ये प्रधानतयाङ्गीकृतानां तत्तदंशानां भेदात् चत्वारस्तावत्सिद्धान्ताः समुपलभ्यन्ते—अलङ्कारसिद्धान्तः, रीतिसिद्धान्तः, ध्वनि-सिद्धान्तः, रससिद्धान्तश्चेति। प्रायः सर्वेऽपि पुरातना आलङ्कारिकाः काव्यस्य काव्यत्वमलङ्कारपरतन्त्रं मन्यन्ते। अतएवोच्यते—

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमपि पावकम्॥

अतएव चास्य शास्त्रस्य प्राचीनतरं नाम अलङ्कारशास्त्रमिति।

अन्ये पुनर्वामनादयः अङ्गीकुर्वाणा अपि अलङ्काराणामलङ्कारतां ततोऽपि रीतिमुत्तमां काव्यात्मभूताञ्च मन्यन्ते। अत एवाह वामनः "रीतिरात्मा काव्यस्य, विशिष्टा पदरचना रीतिः, विशेषो गुणात्मा" इत्यादि। रचनावैशिष्ट्यनिदानानाञ्च गुणानामभावे अलङ्काराणां निष्फलतां प्रतिपादयति वामनः।

"यदि भवति वचश्च्युतं गुणेभ्यो,
वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं
नियतमलङ्करणानि संश्रयन्ते॥

आलङ्कारिकाग्रणीश्च तत्रभवानानन्दवर्द्धनाचार्यः वाच्यलक्ष्यार्थव्यतिरिक्तस्य व्यङ्ग्यार्थस्यैव वस्त्वलङ्काररसरूपैस्त्रिविधस्य काव्यात्मतां सयुक्तिकं प्रत्यपीपदत्, ध्वन्यभाववादिनाञ्च मतानि सोपपत्तिकं खण्डयामास।

अनन्तरञ्च कुन्तकः वक्रोक्तेरतिव्यापकं रूपमङ्गीकुर्वन् ताञ्च वर्णवक्रता, पदपूर्वार्धवक्रता, पदोत्तरार्द्धवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रवन्धवक्रता चेति षोढा विभज्य तत्रैव च त्रिविधरूपस्यापि ध्वनेरन्तर्भावं निरूपयन् तस्याः काव्यजीवितताम‌ङ्गीचकार। परन्तु कुन्तकस्याऽयं वक्रोक्तिसिद्धान्तो ध्वनिसिद्धान्तस्याग्रे निष्प्रभ इवासीत्, नाऽभूत् चान्येषामालङ्कारिकाणामादरभाजनम्।

सामान्यतो वस्त्वलङ्काररसात्मना त्रिविधस्यापि ध्वनेरभ्युपगतेऽपि काव्यात्मत्वे रसध्वनेरेव काव्यात्मत्वम्। अन्ययोश्च

रसद्वारैव तत्त्वमभ्युपगम्यते अभिनवगुप्ताचार्यैः। अत एवोक्तं तैर्लोचने "तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कार-ध्वनी तु सर्वथा रसं पर्यवस्येते इति वाच्यादुत्कृष्टौ तौ इत्यभिप्रायेण ध्वनिः काव्यात्मा इति सामान्येनोक्तमिति।"

रससिद्धान्तश्चायमिदंप्रथमतया दृश्यकाव्यमात्रसम्बद्धतया निबद्धो भरतेन स्वीये नाट्यशास्त्रे। सूच्यते चास्यैव रसस्य प्राधान्यं "तत्र रसानेव तावदादावभिव्याख्यास्यामः। न हि रसादृते कश्चिदर्थः प्रवर्तते" इत्यादि वदता भरतेन। तदेवं नाट्ये प्रधानतयाङ्गीकृतोऽप्ययं रसः नैवाशकत्तादृशं प्राधान्यमवाप्तुं श्रव्यकाव्य-जगति, यावन्नासौ ध्वनिसिद्धान्त आत्मानमलभत। अतएव प्रायः सर्वेऽपि आनन्दवर्धनात् प्राक्तनाः आलङ्कारिकाः भामहदण्ड्यादयः रसं केवलमलङ्कारेष्वन्यतममङ्गीकुर्वन्तः श्रव्यकाव्येषु रसस्य नैव तावत् प्राधान्यं दित्सन्ति यावदुपलभ्यते दृश्यकाव्येषु। कालान्तरेण च आनन्दवर्धनाचार्यैः प्रचुरं प्रचारं नीतः अभिनवगुप्तपादैश्चोपबृंहितोऽयं ध्वनिसिद्धान्तः रसस्यैव सर्वोत्तमतां स्थापयति, सूचयति चास्यैव काव्यात्मताम्। अतएवालङ्कारविद्यासूत्रकारो भगवान् शौद्धोदनिः काव्यस्वरूपं निरूपयन् "काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत्" इत्यादिना काव्ये रसस्य प्राधान्यं निरूपयति। साहित्यदर्पणरचयिता च विश्वनाथकविराजः शौद्धोदनिवत्काव्यलक्षणे आदिपदमप्रयुञ्जानः ततश्च परिहरन्नलङ्कारादि-सङ्ग्रहं रसस्यैव काव्यात्मतां मुक्तकण्ठमुद्घोषयति "वाक्यं रसात्मकं काव्यम्" इत्यादिना। रसात्मकमिति न केवलं रसस्य, रसाभास-भावाभास-भावशान्त्या-

दीनामपि ग्रहणम्। "रस्यते इति रसः" इति व्युत्पत्तेः। अत एवोक्तम्

"रसभावौ तदाभासौ भावस्य प्रशमोदयौ।
सन्धिः शवलता चेति सर्वेऽपि रसनाद्रसाः॥"

तादृशः "रस एव आत्मा सारभूततया जीवनाधायको यस्य, तेन विना तस्य काव्यत्वाभावस्य प्रतिपादितत्वाद्।"

रसस्वरूपञ्च निरूप्यते भरतेन "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति। सूत्रमिदं बहुधा बहुभिर्भट्टलोल्लटप्रभृतिभिर्व्याख्यातचरमिति नैतत्सर्वमत्र वितन्यते। युक्तरूपमिदमभ्यूह्यते, यत् नाट्यनिरूपणप्रवणोऽयं भगवान् भरतः नाटचसम्बद्धरूपेणैव रसं लक्षयतीति। अतएवायं व्यपदिशति रसं 'नाटचरसः' इति, अतएव च प्राचीनाः सर्वेऽपि व्याख्यातारः भट्टलोल्लटश्रीशङ्कुकभट्टनायकप्रभृतयः नाटचरससम्बद्धत्वेनैवैतत्सूत्रं लक्षयन्तो विमृशन्ति किं रसः—अनुकार्याश्रयः, नटाश्रयः, उत सामाजिकाश्रयः इति। किमसौ उत्पद्यते अनुमीयते आहोस्विद् भुज्यते इत्यादि च। परन्तु रससिद्धान्तमिमं नाटच इव श्रव्यकाव्येऽपि प्रवर्तयता अभिनवगुप्तपादेनेदं सूत्रं तथा व्याख्यायते यथा तत् नाटचरसमिव काव्यरसमपि सङ्गृह्णीयात्।

सत्स्वपि केषुचिदन्येषां मतेषु अभिनवगुप्तप्रतिपादितमेव रसस्वरूपं प्रायः सर्वेऽप्यालङ्कारिकाः अङ्गीकुर्वन्ति। अतस्तदुक्तविधयैव रसं लक्षयति विश्वनाथः।

"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिः स्थायिभावः सचेतसाम्॥"

लौकिकानां तावद्रत्यादीनां पश्यामः कानिचित् कारणानि,

कार्याणि, सहकारीणि च। नाटचकाव्यादि-निबद्धानामलौकिकानां रत्यादीनां कारणादिभिरप्यलौकिकैरेव भवितव्यमिति तेषां क्रमशः नूतनान्येव नामानि दीयन्ते विभावाः, अनुभावाः, सहचारिणश्चेति। तदुक्तम्––

"कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाटचकाव्ययोः।
विभावाश्चानुभावाश्च कथ्यन्ते व्यभिचारिणः ॥"

विभावश्च द्विविधः––आलम्बन-विभावः, उद्दीपनविभावश्चेति। तत्र तावद्रसादीनामुद्भवस्य उद्बुद्धेर्वा कारणं वनितादिरालम्बनविभावः, उद्भूतस्य च रत्यादेः पुष्टिहेतुरुद्दीपनविभावः वसन्तचन्द्रोदयादिः। रत्यादेश्च पुष्टस्य कार्याणि कटाक्षभ्रूविक्षेपादीनि अनुभावाः। स्तम्भस्वेदादयोऽष्टौ सात्त्विकभावा अपि अनुभावेष्वन्तर्भवन्ति। निर्वेदग्लानिशङ्काद्याश्च त्रयस्त्रिंशद् व्यभिचारिभावाः स्थायिभावान् तत्कार्याणि च सम्यगास्वादयोग्यतां नयन्ति, विशेषेणाभितश्चारयन्तीति-व्युत्पत्तेः। तदेवं नाटचे प्राधान्येनाभिनीयमानैः, काव्येषु चोपनिबद्धैः विभावादिभिः व्यज्यमानो रत्यादिः स्थायिभाव एव रसः। नाटचकाव्यादिषु व्यक्तिविशेषसम्बद्धतया उपनिबद्धा अप्येते विभावादयः अनुभूतिबलात् सामाजिकैः साधारण-रूपेण गृह्यन्त। अर्थात्––स्वसम्बद्धत्वेन, रिपुसम्बद्धत्वेन, उदासीन-सम्बद्धत्वेन वा न गृह्यन्ते। तदुक्तम्––

"परस्य न परस्येति ममेति न ममेति च।
तदास्वादे विभावादेः परिच्छेदो न विद्यते ॥"

अतश्च सहृदय-समास्वाद्यतां भजतेऽयं रसः रसताञ्च। अतएव

यत्र यत्रैतादृशस्य साधारणीकरणस्य वलवान् प्रतीघातः दृश्यते यथा रत्यादेः गुरुदेवतादि-गतत्वेनोपवर्णने, तत्र अनौचित्य-प्रयुक्ता रसाभासतैवास्य निरूप्यते न रसता।

रसानाञ्चैषां संख्या-विषये विप्रतिपद्यन्ते आलङ्कारिकाः। तत्र शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुता अष्टावेव रसाः, विशेषतश्च नाट्ये, इति मन्यन्ते धनञ्जयादयः। शान्तस्यापि रसता, वस्तुतः तस्यैव प्रधानरसता—सोपपत्तिकं निरूप्यते अभिनवगुप्तपादैः। रुद्रटः प्रेयसो दशमरसतामङ्गीकरोति। विश्वनाथो वात्सल्यं पृथगङ्गीकरोति रसतया। भोजः पुनः शृङ्गारमेकमेव रसमभिप्रैति परन्तु प्रसिद्धशृङ्गारभिन्नतया तस्याहङ्काररूपतां निरूपयति—

"शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सवत्सल-भयानक-शान्तनाम्नः।
आम्नासिषुर्दशरसान् सुधियो वयन्तु
शृङ्गारमेव रसनाद्रसमामनामः" ॥इति

तदेवमेतादृशस्य रसस्य उपलक्षणविधया तदाभासादीनाञ्च काव्यात्मता प्रतिपाद्यते "वाक्यं रसात्मकं काव्यमिति।"

पण्डितराजो जगन्नाथः पुनर्नैतल्लक्षणं निर्दुष्टं मनुते, अव्याप्तिदोषाक्रान्तत्वात्। असौ वदति—'यत्तु रसवदेव काव्यमिति साहित्यदर्पणे निर्णीतं तन्न। वस्त्वलङ्कार-प्रधानानां काव्यानामकाव्यत्वापत्तेः। न चेष्टापत्तिः। महाकविसम्प्रदायस्याकुलीभावप्रसङ्गात्। तथा च जलप्रवाहवेग-निपतनोत्पतनभ्रमणानि कविभिर्वर्णितानि कपिबालादिविलसितानि च। न च तत्रापि कथञ्चित् परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम्।

ईदृश रसस्पर्शस्य गौश्चलति, मृगो धावति इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात् । अर्थमात्रस्य विभावानुभावव्यभिचार्यन्यतमत्वात् इति 'दिक्' इति। स्वयञ्चैकं लघुतरम्, न केवलं प्राचीनानां नव्यानामपि विविधानां विशेषाणामन्तर्भावकं लक्षणं निरूपयति "रमणीयार्थ-प्रतिपादकः शब्दः काव्यमिति। विमर्शकाग्रणीः काणे महाशयो विश्वनाथोक्तं वाक्यं रसात्मकं काव्यमित्यादि लक्षणं लक्ष्यात् काव्यादपि कष्टतरमिति वदन्, विवादग्रस्तानां रसादीनामसङ्ग्रहात् जगन्नाथीयं लक्षणमेव लक्षणान्तरेभ्यः साधीय इति वदति।



## ४०. अल्पव्ययता साधुः

सुविदितोऽयमाभाणको लोके—

"वर्षार्थमष्टौ प्रयतेत मासान् निशार्थमर्धं दिवसं यतेत।
वार्धक्यहेतोर्वयसा नवेन परत्रहेतोरिह जन्मना च॥"

श्लोकश्चायं बोधयति विवेकिनः सर्वेऽपि जना धनादिकं सञ्चिनुयुः भविष्यत्सुखलाभायेति। ऋते च केभ्यश्चिद्वाणिज्यादि-प्रवृत्तेभ्यः सर्वेषामन्येषां धनसञ्चयो नामायं प्रायः क्रमसाध्यः दीर्घकाल-सम्पादनीयश्च। अतएवोक्तम्—

"जलविन्दुनिपातेन क्रमशः पूर्यते घटः।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च॥"

धनसञ्चयोऽयं यथा प्राधान्येन धनस्यार्जनेन सम्पाद्यते तथा अर्जितस्याव्ययीकरणेनापि। यथा यथा संगृह्यते वित्तं यदि तथा तथा व्ययीक्रियते, कथं वैतत् सञ्चीयेत। न शक्यते व्ययः सर्वथा परिहर्तुम्। तदभावे हि न पार्यते जीवितुमपि, अर्थस्य च स्यात् व्यर्थता। अत उत्तमोऽयं धनसञ्चयोपायो यदल्पव्ययता नाम। अतएवोक्तम्—

"आयस्य तुर्यभागेन व्ययकर्म प्रवर्तयन्।
अन्यूनतैलदीपो हि चिरं भद्राणि पश्यति।"

परन्तु अयमपि नियमः नैव सर्वैरप्यनुसर्तुं शक्यते, यतो लोके ह्यस्मिन् नैके सन्त्येतादृशा येषामायो जीविकायै अपि नैव पर्याप्तः, का कथा सञ्चयस्य। विशेषतश्च वहूनामिय-

मस्मद्देशीयानां गतिः। अथापीयमल्पव्ययशीलता एतादृशामपि प्रभवेदनावश्यकक्लेशप्रहाणायेति न काप्यत्र संशीतिः।

प्रायोऽस्मिन् जगति सर्वे जनाः नैककामवशंवदीभूतचेतसः "इदमद्य मया लब्धमिदं लप्स्ये मनोरथम्" इति दुष्पूरैराशाशतैर्विडम्ब्यमानाः प्रभूतं धनं व्ययीकुर्वन्ति। अधिकाधिकधनलिप्सया चाहर्दिवं सन्तप्यन्ते। केचिच्च भविष्यद्धनलाभं चिन्तयन्तः, ऋणादिग्रहणेन प्रथमत एव महान्तं व्ययं कुर्वन्तः तद्भारेणाजीवितान्तं क्लिश्यन्ति। अपि च साधारणमिदं मानसिकं दौर्बल्यं यत् सर्वोऽपि जन आत्मनः सहजा यथार्था च या शक्तिः ततोप्यधिकतरां शक्तिं प्रदर्श्य लोकं वञ्चयितुमिव प्रवर्तमानोऽन्तत आत्मानमेव प्रतारयति। शताधीश आत्मानं सहस्राधीशं दर्शयितुमभिलषति, सहस्राधीशो लक्षाधीशं लक्षाधीशश्च कोटीश्वरम्। इयञ्च रीतिर्न केवलं धनविषये, विद्यावृद्ध्याभिजात्यादिष्वपि समुपलभ्यते लोके। परन्तु अयं विशेषो विद्याऽऽभिजात्यादिविषयको दम्भो न तावते भवेदपकाराय यावतेऽयं धनविषयकः। धनाडम्बरशीलो हि जनः धनिनमात्मानं ख्यापयितुं बहुधा धनं व्ययीकरोति। अन्ते च मिथ्यागौरवमनोमोदकानास्वादयन् दरिद्रतादुर्भरं जीवितं यापयति। कति वा न दृश्यन्ते लोके ये किल वंशगौरवमित्यादि यत्किञ्चिल्लपन्त उद्वाहादिषु प्रभूततरं धनं वृथा विकिरन्ति, कुर्वन्ति चात्मानं लोकोपहासभाजनम्। अहो कियदिदं मौर्ख्यं यदयं मिथ्यामानाभिमानो नाम। सत्यमेव खलूक्तं कविशेखरेण शेक्सपियरमहोदयेन फालस्टाफमुखेन—"मानः! कोऽयं मानो नाम? श्वासमात्रम्! अर्थात् वाङ्मात्रम्" इति। स्यान्नाम विदूषकमुखनिस्सृतेय-

मुक्तिः मानान्तरविषये अयथार्था। मिथ्याभिमानस्य विषये पुनः यथार्थैव, यो हि पूर्वोक्तया विधया नैकासामापदां मूलम्।

अद्यत्वे च बहुधेदं श्रृणुमः यत् सर्वत्रापि क्षेत्रे आर्थिकी अविनीतिः नितरां निरूढमूला करालबाहाभिः देशमस्माकं निष्पीडयतीति। किं वात्र कारणम्? अधिकव्ययशीलतैव जनानाम्। सर्वेऽपि हि जना लोके विशेषतश्चाधिकारिणः प्रायः स्वस्वकर्त्तव्यविमुखा नैकाडम्बरकलितं जीवितमेवातितरां महितं मन्यन्ते। तदर्थञ्च न्यायतः प्राप्तं धनमपर्याप्तं पश्यन्त उत्कोचादिना च तत् संजिघृक्षन्ति। आरम्भे चाल्पापीयं प्रवृत्तिः कालक्रमेण सुदृढीभवन्मूला नैव शक्येत समुन्मूलयितुमित्यन्ततो विवेकभ्रष्टानामेतादृशां शतमुखमैहिकमामुष्मिकञ्च विनिपातं दिशति। शेक्सपियरकविर्वदति—"अति महदिदमाश्चर्य-कारणं यत् असत्यमपि शतशः क्रियासमभिहारेणोच्यमानं न केवलं श्रोतृणां,वक्तुरपि सत्यताधियं जनयति कालक्रमेणेति।" अनेनैव च नयेन अधर्मोऽपि नैकैरनुसृतो धर्मताभ्रान्तिमिव जनयति लोके। यतः श्रृणुमः खलु वयं बहून् ये सगर्वं संगिरन्ते "मम पुत्रस्य शतद्वयं रूप्याणि वेतनम्, परन्तु शतत्रयमन्यथाऽन्यथा लभ्यते" इति। प्रत्यक्ष एव किलाऽयमभ्युपगमो यत् मम पुत्र उत्कोचादीन् सम्यग् गृह्णन् कुक्षिंभरमूर्धन्य इति। यदैवमेतादृशी प्रवृत्तिर्लोके किमत्राश्चर्यं यदि देशेऽस्मिन् सर्वतः अविनीतिवेतालो नरीनृत्यतीति। अतश्चेदं सिद्धं भवति एतादृशदोषापाकरणे अल्पव्ययताभ्यास एव केवलः साधुरिति। कृपणताऽपरनाम्नी अव्ययता पुनः सर्वपापनिदानं नितरां वर्जनीयेति अन्यदेतत्।

सुशकमेव चाल्पव्ययतायाः सम्पादनमभ्यासवशात् सर्वेतर-

सद्गुणवत्। यदा यदा किञ्चिद्वस्तु क्रीयते तदा तदा इदं चिन्तनीयं किमेतन्ममात्यन्तमावश्यकम्, किञ्च वा ममार्थिकी शक्तिः पर्याप्ता एतत् क्रेतुमिति। अतएव तत्रभवान् महात्मा गान्धिरुपदिशति—सर्वेणापि आयव्ययगणनं निर्वोढव्यम्। येन सिंहावलोकनविधया पश्यन् जनो ज्ञातुं शक्नुयात् कियद्वा अमुकस्मिन् मासे मया आवश्यक-वस्तूनां कृते धनं व्ययितम्, कियद्वा अनावश्यकवस्तूनामिति। क्रमेण चानावश्यको व्ययः शक्यते परिहर्तुम् इति। एवञ्चेत्थं वक्तुं शक्यते—

"प्रत्यहं पर्यवेक्षेत मनुजो व्ययमात्मनः।
किमायादधिको व्यर्थः किं वान्यूनोऽयमायतः॥"

अल्पव्ययता चेयं न केवलं प्रत्येकव्यक्तेरेव, विस्तृतराज्यादेरपि भवत्येवाभ्युदय-हेतुः। यतः प्रायः सर्वापि नीतिः धर्मादयश्च संकुचितेन रूपेणैकैकशो मनुजान् विषयीकुर्वन्ति, विस्तृतरूपेण च राज्यादीनि। भगवान् रामचन्द्रः कुशलप्रश्नविधया राजधर्मानुपदिदिक्षुः आत्मानं नेतुं चित्रकूटमुपागतं भरतं पृच्छति—

"आयस्ते विपुलः कच्चित् कच्चिदल्पतरो व्ययः" इति।

व्ययस्याल्पतरतां ब्रुवता च भगवता कोशस्याभिवृद्धौ राज्ञो जागरूकताया आवश्यकता सूच्यते, यतः कोशस्य राज्याङ्गेष्वन्यतमत्वं प्रतिपाद्यते राजनीतिज्ञैः। अतएवाद्यत्वे भारतीयराज्यनिर्वाहकाणां विदेशेभ्योऽधिकाधिकऋणग्रहणेन प्रभूतव्ययप्रवणेयं प्रवृत्तिः कैश्चिदधिक्षिप्यते। परन्तु नैवेदं विस्मर्तव्यं यदागामिने महते लाभाय व्ययीकृतिः न दोषायेति। 'सहस्रगुणमुत्स्रष्टुमादत्ते' इत्ययं न्यायो यथा कराद्यादाने साधीयान् तथा ऋणाद्यादाने

तद्व्यये च यस्य किल विषये वक्तुं शक्यते "सहस्रगुणमादातु-मुत्सृजत्यधिकं वसु" इति, यदि सहस्रगुणादानं श्रद्धेयं भवेत्।

योगरूढ्या प्रायः धनैकविषययोरपि आयव्ययपदयोरन्य-विषयताङ्गीकारेण न कोऽपि दोषो यद्यल्पव्ययतायाः साधुता अन्यानपि विषयतया संगृह्णीयात्। अतश्च शारीरशक्ते-रल्पव्ययस्य साधुतामुत्पश्यन् महाकविः कालिदासो वदति— 'अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्म-साधनमिति।'

एवं वागादीनां कर्मेन्द्रियाणां चक्षुरादीनाञ्च ज्ञानेन्द्रियाणां शक्तिं संरक्षितुमभिलषता नैव तेषामनावश्यक उपयोगः कर्तव्य इत्युपदिश्यते अभियुक्तैः। प्रसिद्धमेव पुराणादिषु यथा तपोधनाः स्वमुत्तमं धनं तपः न कदापि व्ययंयितुमुत्सहन्ते, व्ययितं वा कदाचित् महता प्रयत्नेन पुनः पूरयन्तीति। एवञ्चैतत्सिद्धं भवति न केवलं धनतया ज्ञातस्य धनस्य सर्वस्यापि धनस्य अल्प एव व्ययः श्रेयानिति। ऋते च विद्याधनात् तद्धि "व्यये कृते वर्धत एव नित्यम्" यो हि वस्तुतः सञ्चय एव न व्ययः। तस्य च व्ययता तदैव भवेत् यदैतत् स्यादपात्रे निहितम्। तादृशश्च व्ययोऽसाधु-रेवेति को वात्र विप्रतिपद्यात्?

०

## ४१. 'उदारचरितानां तु वसुधैव कुटुम्बकम्'

अथास्मिन् लोके गृहीतजन्मनो जनिमात्रस्य कृतसहप्रादुर्भावौ द्वावेव दृश्येते धर्मौ आहारो निद्रा चेति। तौ किल ईषदिव मनसा शरीरेण चाधिकमभिसम्बद्धौ। तत्समनन्तरभाविनौ चान्यौ द्वौ धर्मौ मानसौ अहङ्कारो ममकारश्चेति। पश्चादुत्पत्तिमतोरनयो: संलक्ष्यते एतादृशी बलवत्ता यदेतौ प्रायो विजिताशनायापिपासानिद्रादीन् न मुञ्चतो योगिवरेण्यानपीति, का कथा अन्येषां वराकाणां लोकव्यवहारैकव्यापृतानाम्? यत: "अहमेतादृङ्महाभाग:, मम चैतावन्माहात्म्यम्, संम्पादयिष्यामि चेतोप्यधिकतरम्" इति पुन: पुन: परिकलयन्त एव नैके संयमिन: स्वोन्नतिसम्पिपादयिषया समुद्युञ्जाना: त्यजन्तोऽपि विषयान्तराणि एतामहङ्कृतिं ममकृतिञ्च पुष्णन्त: श्रूयन्ते। अतएव ब्रूमो यत् प्रबलतराविमौ मनुजस्य धर्मौ अहङ्कार-ममकाराविति। तुल्यबलावेवैतौ अहङ्कारममकारौ प्राय: यमलाविव सहजन्मानावेवेति शक्यते वक्तुम्। परन्तु सूक्ष्मेक्षिकया दर्शनेन प्रतीयते यदयं ममकार एव प्रथमतो गृहीतजन्मा अहङ्कारात् तस्य च प्रतिपदं हस्तावलम्बं ददातीति। यतो दृश्यते हि अहङ्कारगन्धशून्योऽपि जातमात्र: शिशु: द्वित्रिमाससमनन्तरमेव प्रकटीकुर्वन् कियन्तञ्चिन्ममकारं प्रथमतो मातृविषये ततश्च कालक्रमेण पित्रादीनां

विषये। गच्छता चानेहसाऽयमेव ममकारो विषयीकुर्वन् नैकान् विषयान् वहुमुखं वर्धते। ममेयदैश्वर्यम्, ममेयती विद्वत्ता ममैतादृशी शक्तिः, मम चैवमाढ्या वन्धुतेत्यादिभी रूपविशेषैर्विविधैः, इयमेव च ममताबुद्धिः, अहमाढ्यः, विद्वानहमित्यादिभी रूपैः अहङ्कृतिरूपेण पर्यवस्यतीति मन्यामहे, अन्ततः परस्परं पुष्यन्तावेतौ अहङ्कारममकारौ एकरूपतामिव व्रजत इति। किन्तु पूर्वोक्तया दिशा प्रथमासादितजन्मा अहङ्कारस्योपष्टम्भको ममकार एव तस्मादतिरिच्यते इति निर्विवादमिवेदम्। अतएवायमुपवर्ण्यते सर्वेषामनर्थानामादि कारणं संसृतितरोर्मूलकन्दमिति। अस्यैव च प्रहाणाय अधिकं प्रयत्यते नैकैर्योगिवरेण्यैः। परन्तु अङ्गुलीपरिगणनीया एवंतादृशा महाभागा अस्मिन् जगति यैः किल समूलमुन्मूलितेयं चिरवद्धमूला ममकृतिः। किमेवमशक्यनिर्मूलनैवेयं ममकृतिः? बाढम्। अजय्यैवेयं प्रायः सर्वेषां मनुजानाम्, परन्तु अस्त्येव कश्चिदुपायविशेषो येनानिर्मूलितेपि सुतरां ममकारे शक्यत एव तत्सम्वद्धान् दोषानपाकर्तुम्। कोऽयमुपायः? अयमत्रोपायः यदपरित्यज्यैवामुं ममकारं तद्विषयाणां विस्तृतीकरणं नाम। अर्थात् न केवलं पुत्रदारगृहादय एव, परन्तु सर्वमपीदं जगद्विषयीकर्त्तव्यं ममकारस्य ममेदं सर्वमेव जगदिति। एवं हि ममकारसम्वद्धाः, सर्वेऽपि दोषा दूरापास्ता भवेयुः। ममकारो ह्ययं न ममकारत्वेन सर्वानर्थानां निदानम्, परन्तु 'अयं परः, न मदीयः, इत्यादिरूपेण भेदवुद्धेः द्वेषादीनाञ्च जननेन। यदि चायं सर्वमेव जगद्विषयीकुर्यात् को वास्त्यवकाशः तादृशानां भेदमतिद्वेषादीनाम्। अतएवाह विद्वत्कविः नीलकण्ठदीक्षितः—

"त्यक्तव्यो ममकारस्त्यक्तुं यदि शक्यते सोऽयम्।
कर्त्तव्यो ममकारः किन्तु स सर्वत्र कर्त्तव्यः॥"

भङ्ग्यन्तरेण च रुचिरतरमिदमुच्यते शंकरभगवत्पादाचार्यैः—

"त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि मय्यसहिष्णुः।
भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम्॥"

अत्र च समचित्तः सर्वत्र इति सर्वत्र ममकारवर्जितः अथवा सर्वस्यापि विष्णुरूपत्वात् सर्वत्रापि ममकारं कुर्वन्वेति सूच्यते। एतादृशानेव च जगदखिलं ममकारस्य विषयीकुर्वतः लोकोत्तरान् पुरुषतल्लजानधिकृत्येदमुच्यते "उदारचरितानान्तु वसुधैव कुटुम्बकम्" इति।

ननु किमिदमुच्यते विश्वमशेषं विषयीकुर्वन्नयं ममकारः सर्वमनर्थव्रातं परिहास्यतीति ? यतः प्रत्युतायं निरन्तरशोकायैव भवेत्। परिमितमपि हि वस्तुजातमात्मीयताधिया पश्यतामयमुपलक्ष्यते महान् शोकमोहादिः तदपचयनाशादिप्रयुक्तः। किं पुनर्हन्त भोः! दुःखवहुलमिदं जगदखिलमात्मीयं कलयतः। वदन्ति शङ्कर-भगवत्पादाः सोदाहरणं ममकारस्य क्लेशैकमूलताम्—

"ततश्च निश्चितमेतदवगम्यते—मिथ्यानुभवनिमित्त एव दुःखानुभव इति। तथाहि, पुत्रमित्रादिमत्सु वहुषूपविष्टेषु तत्सम्बन्धाभिमानिष्वितरेषु च पुत्रो मृतो मित्रं मृतमित्येवमाद्युद्घोषिते येषामेव पुत्रमित्रादिमत्त्वाभिमानः तेषामेव तन्निमित्तं दुःखमुत्पद्यते, नाभिमानहीनानां परिव्राजकादीनाम्। अतश्च लौकिकस्यापि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टम्।"

अतएवाहुर्लोकज्ञा अपि—

यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान्।
तावन्तोऽपि विलिख्यन्ते हृदये शोकशङ्कवः ॥

सत्यमिदं विस्तृततरविषयोऽयं ममकारः प्रभूततरमेव जनयेद्दुःखमिति। परन्तु नेदमित्यत्र विस्मर्त्तव्यं यदेते उदारचरिताः आत्मीयताबुद्धिविषयाणां दुःखेन दुःखितत्वमिव तत्सुखेन सुखित्वमपि लभेरन्निति। इदमत्र वक्तुं शक्यते, प्रायो दुःखमेवाधिकमस्मिन् जगतीतले इति सुखादपि दुःखितैवाधिकं सम्भाव्यते एषामुदारहृदयानामिति। नूनं सत्यमेवेदमभविष्यत्, यदीमे केवलं ममकृतिविषयानेव विस्तारयन्तः स्वयञ्चाकिञ्चित्कराः सर्वेषां सुखदुःखैरात्मनोऽपि तद्वत्तामापादयिष्यन्। यतः स्वाभाविकमिदमेतादृशां यत् यथा यथाऽयं ममकारो वर्धते तथा तथा तद्विषयाणां प्रेयसेप्येते अनिशं प्रयतन्ते, तत्साकल्येन च विन्दन्ते अमन्दमानन्दम्। एतादृशा एव च विषयीकुर्वन्त्यात्मानं "शान्ता महान्तो निवसन्ति सन्तो वसन्तवल्लोकहितं चरन्तः" इत्यादि-सूक्तीनाम्। अतएवेत्थमुच्यते उदारचरितानाम् इति। न तु पुनः केवलं उदारसुमतीनाम् इति, उदारहृदयानाम् इति वा। स्वार्थलिप्साशून्यां परोपकृतिदीक्षां नितरां संवर्धयन्तीयं विस्तृतविषया ममकृतिः कालक्रमेण सर्वानप्यहङ्कारादीनन्यानपि दोषानुदस्यन्ती स्वयमपि चान्ततो विलीयते। यथा हि कतक-रजो रजोऽन्तराविले पयसि प्रक्षिप्तं रजो विनाशयति, स्वयञ्च विनश्यति, इत्यहो माहात्म्यमुदारचरिततायाः।

अथ किमिदमखिलं वाचामात्रेणोच्यते, अथवास्त्यत्र कियांश्चित् सत्यलेशोऽपीति? ननु कथमेवं सन्दिह्यते।

निरूपितैव किलोदारचरितानामुत्तमपुरुषता सप्रमाणम्। बाढम्। परन्तु सर्वमेतद्वाचो युक्तिमात्रमेव भवेत् यावन्नैतादृशा वसुधैवकौटुम्बिका उपलक्ष्येरन्। सर्वविदितैव च तेषां मृग्यता अस्मिन् नैकविद्वेषकलुषिते काले। तथाहि, अद्य खलु एकदेशीया देशान्तरस्थान् द्विषन्ति, एकप्रान्तीयाः प्रान्तान्तरस्थान्, एकभाषाभाषिणो भाषान्तरीयान्, एकपक्षीयाः पक्षान्तरीयान्, एककुलजा अन्यकुलजांश्चेति। प्रतिदिवसं बहुधा सप्रयत्नं कृतसंवर्द्धन इव प्रद्वेषभावे शशविषाणायते खलु उदारचरितता! केनोक्तं उदारचरितता विक्रीयते विपण्यामिति? परन्तु कथमेवैतावता वक्तुं शक्यते नैवोदारचरिताः सर्वथोपलक्ष्यन्त इति। कति वा नासन्न सन्ति वा उदारचरिताः गान्धिनेहरू मुखाः, ये किल सकलजनश्रेय एवात्मश्रेयस्तया भावयन्तः तदर्थमेव चाहर्निशं कृतोद्योगाः, तत एव महान्तमानन्दमन्वभवन्, अनुभवन्ति च। अपि च प्रत्यक्षत एव खलु नैकशोऽध्यक्षयांकुर्महे वयं यत् कश्चिदौदार्यविशेषमधिकं प्रदर्शयत्यन्यस्मात्, तस्माच्च तृतीय इत्यादि। अनेनैव दृष्टान्तेनेदं सम्भाव्यते यदेतादृशा अपि भवेयुर्लोके ये किल जगदखिलमेव आत्मीयताधिया पश्येयुरिति।

प्रायो जन्मना सहभूरपीयमुदारचरितता संस्कर्तुं नूत्नतया सम्पादयितुञ्च शक्यते लोकदर्शननैपुण्येन अभ्यासवशेन च। अतएव चेदं श्रृणुमो यत् अर्थशास्त्रदेशचरित-साहित्याद्यध्येतृणां मानसी प्रवृत्तिः प्रायः विपुलतरा भवेत् व्यावसायिक-विद्या-मात्र-निष्णातानां प्रवृत्तेरिति। अतएव चेदमुद्धुष्यते मेधाविभिः सर्वत्राद्यत्वे परिलक्ष्यमाणः कलाविद्यानादरः Neglect of

Humanities उदारचरितता कथामात्रशेषां कुर्वन् विश्व-शान्तेरेव भञ्जको भवेत् । अतश्चैतादृशविद्यानामुद्धरणे प्रयतितव्यं सर्वैरिति ।

## ४२. वसन्तवर्णनम्

नित्योऽयं कालः सम्बन्धवशात् शशिसूर्यादीनामनादिरपि सादिरिव, अनन्तोऽप्यन्तवानिव, अपरिच्छिन्नोऽपि परिच्छिन्न इवोपलक्ष्यते, विभुरिव महाकाशो घटाकरकाद्युपाधिभेदात्। प्राकृतिका नैके भेदाः कालेऽस्मिन्नध्यारोप्यन्ते यत्कृत एवायं दृश्यते कालस्य विभिन्नऋतुरूपेणात्र विभागः। 'मधुश्च माधवश्च वासन्तिकावृतू इति चैत्रवैशाखमाससम्बन्धत्वेन श्रुत्या वर्णितोऽयं वसन्त ऋतुर्न केवलं मासगणनावशेन, प्राकृतिकसौन्दर्यवैशिष्ट्येनापि प्रथमं स्थानं लभते सर्वेषामृतूनाम्। अतएवाह तत्रभवान् गीताचार्यः—

"मासानां मार्गशीर्षोऽस्मि ऋतूनां कुसुमाकरः।"

अहो! अनुत्तमा कमनीयताऽस्य कुसुमाकरस्य, यो ह्युद्युङ्क्ते सममेव सन्तर्पयितुं पञ्चानामपीन्द्रियाणां व्रातम्। वसन्तागमनवार्ताहर इव धीरं धीरं परिवहत्यसौ मलयाचलपरिसरान्निस्सरन् भुजङ्ग इव भुजङ्गाङ्गनानां तदुपभुक्तमुक्तो मन्दो मारुतः। अनिच्छतामपि जन्तूनां हठादिवाकर्षति दृशं समलंकृतसर्वाङ्गी प्रकृतिवधूः। तस्या इव सुरभिः पटवात्यामोदः सर्वतो विसर्पत्यसौ गन्धो नवविकसितानां कुसुमानामसमानाम्। संगीतकमिवोपकल्पयन्ति ईषच्चलितां लतां परितः प्रवृत्तगीतारम्भाः पुष्पंधयाः, सम्पादयन्तश्च तालबन्धमन्योन्यपरिघट्टितैः। चिरप्रतीक्षितमिवोपायनं सादरं समर्पयन्त्याम्रपनसादयोऽमृतेनेव भरितं फलजातम्।

नूनमन्वर्थकमिदमृतुराज इति नाम वसन्तस्य। स हि सर्वालसतामूलस्य, स्वयं च जडतानिलयस्य दूरत एव परिवर्जयति धर्मान् शिशिरस्य मार्दवातिभूमेः। परिहरतितरामुग्रतामतीवोदग्ररां च सकलललाटन्तपस्य तपस्य। स्वयमनुसरति नातिमृदुं नातितीक्ष्णञ्च पन्थानं यत एव किलायं सम्पादयितुं पारयति आत्मने सर्वलोकप्रियताम्। अत एव च किलेमं प्रतिपदं सोत्कण्ठं प्रतीक्षते सचराचरं जगत्, कदा वासौ नन्दनवनीसञ्चारचुञ्चुः कान्तो वसन्ताधिराडायास्यतीति। ज्ञात्वैवास्य मधोर्वसुधातलपर्यवेक्षणकुतूहलेन अत्रागमनं तन्नासीरचरात् चन्दनवनीसौरभपाटच्चरात्समीरणात् दूरत एवापसरति तत्पूर्वकृतभुवनास्कन्दः शिशिरऋतुः। दृश्यते चात्रानुपदं सम्भ्रमातिशय ऋतुराजस्वागतसत्क्रियायै समुद्युञ्जानस्याखिलस्य लोकस्य। तथा हि, स्थाने स्थाने कृतावसथानामुद्गायतामृतुराजगुणान् कलमधुरोऽयमुज्जृम्भते निनादः पिककुलानाम्। सर्वतश्च समवाकीर्यते मधुशीकरार्द्रः सुगन्धिः कुसुमपरागः किंशुकाशोककुरवकमल्लिकाकर्णिकारादिभिर्महीरुहैः। अंशुमदंशुसखैर्नवोद्गतैराताम्रहरितकपिशैः पल्लवजालैः परितः समाबध्नन्ति च तोरणमालामाम्रपादपाः।

अत्रान्तरं निशम्यैव राज्ञः कुसुमाकरस्यागमनवृत्तान्तं तद्दर्शनकौतुकाविष्टहृदया नैकविधानि कुर्वन्ति चेष्टितानि प्राकृतवधूट्यः। किञ्चिदिवापसारयन्ती मारकतांशुजालैरिव विनिर्मितां शैवालनिचोलीमीषदिव च परावर्तयन्ती नवोद्गमरागरमणीयं नलिनवदनं, प्रसारयति पद्मिनी चलन्मधुकरपक्ष्मवीक्षितानि। कुत्रायं कुत्रायमिति ससम्भ्रमस्खलद्गतिः शाखान्त-

मधिरोहन्ती परितः पर्यवेक्षतेऽसौ क्षणे क्षणे गाढीभवदुत्कलिका रसालकलिका। किञ्चिदिव समाकुञ्चिता सुमनोगुच्छैः, शनैः शनैश्च समाक्राम्यन्ती महीरुहस्याग्रशाखाम्, ससाध्वसवेपमानशरीराऽसावाननं घूर्णयति सजृम्भा लता मालती। विवृद्धराजदर्शनाभिलाषा मधुकरसमाक्रान्तशरीरा तनीयसीयं कम्रा कुन्दकलिका प्रकम्पते नितराम्। किं बहुना—

मन्दं मन्दं शिशिरकलितां संक्षिपन्ती निचोलीं
तौषारीं तां प्रकृतिवनिता मोदसंफुल्लचेताः।
सम्पश्यन्ती शशिनि मुकुरे रूपमन्तर्ललन्ती
मन्दाक्रान्तामकृतपदवीं नैकपुष्पोपहाराम्॥

मन्ये आत्मनोऽसन्निधाने तुषारासारे शिशिरेण विक्षतानां वनस्पतिवीरुधादीनां समुज्जिजीवयिषया सुधावृष्टिरिवाभितः पात्यते वसन्तराजेन। अन्यथा तथापातिपत्राणामेषां मृतप्रायाणां कथमिवोपपद्येतैतावान् शोभाविशेषः।

अपूर्वमेव किल नगरोद्यानानामद्य सौन्दर्यं वसन्तागमे, यानि प्रायो जनशून्यान्येवाभूवन् पुरा शिशिराघातेन। तथा हि, नातिश्रद्धालवो राङ्कवेषु, नातिस्थूलैर्नातिसूक्ष्मैश्च वासोभिः कृतचारुवेषाः, दयिताभिः सहात्र सुखं विहरन्ति युवानः। केचिच्च सहागतांस्तनयान् गत्वा तत्र क्रीडतेति दूरतो विसृज्य प्रियाभिः सह संभाषन्तेऽनाद्यनन्तानालापान्। अपरे च केचिन्निवसन्तो निविडजनगेहाकीर्णेऽविज्ञेय-ऋतुपरिवर्तने नगरान्तराले, झटित्येवात्र निशाम्य कुसुमाकरचिह्नानि सोल्लासं वदन्ति—'अहो! आगत एव वसन्त' इति। अन्ये च दूरत एव पश्यन्तो वराङ्गना नेत्रान्तैः, पश्यत्सु तत्प्रियेषु समाकर्षन्ति नयनानि।

एकतोऽत्रोद्याने सम्भूय गच्छतोः जायापत्योर्मध्यान्निष्क्रामन्, दूरतश्चापसृतेन पत्या दत्तमार्गः, कश्चिद् धृष्टो भर्त्रा सक्रोधं जायया च सवैलक्ष्यस्मितं किञ्चित् परावृत्य वीक्षितः सान्तर्हासमपगच्छति। अन्यतश्च नूतनोद्गतान् लतान्तानादित्सन्तः मन्दं मन्दं प्रसारितकराः कतिपये बाला दूरत एवाकर्ण्योद्यानपालस्याक्रोशं पलायन्ते द्रुतचटुलेन गमनेन। केचिच्च नव्या नागरिका बद्धमण्डला नैकाः कथाः कुर्वन्त आकाशवाणीतः श्रुतेन गीतेन स्मारितचित्रपटवृत्तान्ता विवदन्ते गुणदोषविषये तेषां चित्रपटानाम्; स्तुवन्तश्चाभिनेत्रीसौन्दर्यादिकं मनोमोदकान्यास्वादयन्ति तत्र तत्र च कोणेषु निषण्णाः, पठन्त इवागामिपरीक्षार्थं पुस्तकान्यग्रे वहन्तः केचिच्छात्रा भूयो भूयः प्रसारयन्ति नयनानि वदननलिनेषु गतागतानां वनितानाम्। वनिताश्च काश्चित् पश्यन्त्यः संमुखीनानां यूनां मुखानि तद्दर्शनसमनन्तरमेव च समाहरन्त्यो दृष्टीरभिनयन्ति नासाग्रैकप्रणिहितलोचनताम्। पुरा शिशिरसमये दूरतः परिहृता विन्दूत्क्षेपा जलयन्त्रोत्क्षिप्तानां विचित्रविद्युद्दीपप्रभाकल्माषितानां जलधाराणां सादरमुपस्पृस्यन्ते क्रीडालसैर्बालैः। तदेवमानन्दोन्माद इव नगरेषु समुज्जृम्भते सर्वतो वसन्तागमे।

अहो! कियद्वा रामणीयकं न सम्पादितमनेन माधवेन ग्रामान्तेषु! पुरा वर्जितप्रायाणीव सायंसन्ध्यासु ग्रामचत्वराणि शनैः शनैरद्यत्वे समापूर्यन्ते ग्रामवृद्धानां गोष्ठीबन्धैः। बालैस्तत्र तत्रानुकृतकुहूरवाणाम्, अमर्षवशेन च मुहुर्मुहुरुच्चैः कूजतां विसर्पति सर्वतः पुंस्कोकिलानां पञ्चमस्वराञ्चितो विरावः। देवतायतनेषु च वसन्तपूजोत्सवदर्शनार्थमिवेतस्ततोऽहमहमिकया वृद्धानां

मध्यादग्रतः प्रसरन्ति मन्दं मन्दं बालकाः। ते किल श्रद्धादरिद्रा अपि देवतादर्शनेऽधिकतरमभिलषन्ति भगवन्निवेदनीयभक्ष्यलाभम्। नवनागरिकम्मन्याश्च केचिद्युवानः सावज्ञमितस्ततो विलोकयन्तस्तत्र सङ्गताञ्जनान्, भगवत्प्रसादस्वीकृतिमपि अवज्ञां भावयन्तोऽनीहया प्रसारयन्ति करान् समीपस्थगुरुजनभयात्। केचिच्च सुन्दरम्मन्याः शरीरेण केवलं भगवतः सन्निधौ कृतोपस्थितयः प्रसारयन्तश्चाभितश्चक्षूंषि गवेषन्तो रमणीरत्नानि, संलपन्तश्च सोत्प्रासं यत्किञ्चित् समीपस्थानां सुहृदां श्रवणेषु अर्चकेनोपनीतमपि नोपलक्षयन्ति प्रसादम्। बहिश्च देवतायतनात् पिचुमन्दाश्वत्थवेदिकोपाविष्टाः केचिद् वृद्धाः पिबन्तो दीर्घदीर्घा धूमवर्तिकाः सोल्लासमुपवर्णयन्ति ऐषमः समुपलब्धां सस्यसमृद्धिम्, परामृशन्ति च परस्परं कानि वा सस्यानि वपनीयानि आगामिवर्षास्विति। विकचसरसिजात्, द्रुतेन्द्रनीलमणिनीलसलिलापूरात् तारकानिचितादिव विहायसः खण्डात्कासारात् जलमाहर्तुमागता युवतयस्तत्रत्यान् वृद्धान् सभयलज्जं, यूनश्च सवैलक्ष्यस्मितमवलोकयन्त्यो नेत्रान्तैः शनैः शनैरापूरयन्ति स्वप्रमाणानुरूपान् घटान्।

नूनमन्वर्थमेतन्मधुरिति नामास्य वसन्तमासस्य, योऽयं मदिरेव मादयति सचराचरमिदं जगत्, सम्मूर्च्छयतीव चामुं सकलमपि लोकमानन्दपारवश्येन, सर्वत इव विसर्पयति मूर्तीभूतं चैतन्यम्। पुलकिताङ्गीवेयं समुद्यत्पल्लवाङ्कुरा प्रकृतिसुन्दरी नववसन्तसमागमेन, यस्या एवान्तर्गतो रागः समुपलक्ष्यते किसलयेषु। मन्ये भगवान् कालो वर्षति भिन्नभिन्नान् पदार्थान् जगत्यामृतूनां भेदेनेति। तथा हि—अविरतमसौ वर्षति ग्रीष्मे

तीक्ष्णतरमातपम्, प्रावृषि जलधाराः, शरदि अच्छाच्छां कौमुदीम्, हेमन्ते हिमम्, शिशिरे शुष्कपत्राणि, वसन्ते चानन्तं सौन्दर्यम्। अतएव किलेत्यसौ चुकूज कविकुलपुंस्कोकिलो मधुरं मधुरम्—

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः।
सुखाः प्रदोषाः दिवसाश्च रम्याः
सर्वं प्रिये चारुतरं वसन्ते ॥



## ४३. 'सर्वं खल्विदं ब्रह्म'

लोकेऽस्मिन् प्रायः सर्वेऽपि दार्शनिकाः सम्यग्दर्शनमेव निःश्रेयससाधनं मन्यन्ते। दर्शनानामिदमेव किल दर्शनत्वं यत् सम्यग्दर्शनसाधनत्वम्। परन्तु तत्तद्दर्शनोक्त आत्मानात्मादि-दर्शनप्रकारो निःश्रेयसस्वभावश्च पुनर्नितरां भिद्येते तैस्तैरङ्गी-कृतानां प्रमाणानां भेदात् प्रमेयाणां च।

तत्र तावत् प्रत्यक्षमेकं प्रमाणमङ्गीकुर्वते चार्वाकाः। ते किल—

यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥
यदि गच्छेत्परं लोकं देहादेष विनिर्गतः।
कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः॥

इत्यादि वदन्त ऐहिकं सुखमेवापवर्गमभ्युपगच्छन्ति, दुःखञ्च नरकमिति। अनुमानमपि द्वितीयं प्रमाणमङ्गीकुर्वन्ति सौगता वैशेषिकाश्च। प्रत्यक्षभिन्नस्याप्रामाण्यं हि सिसाधयिषता चार्वाकेणाप्यनुमानमेवोपष्टम्भकतया आश्रीयते इति निरर्थकोऽयमेषामनुमानप्रामाण्यनिरास इति ते अभिप्रयन्ति। शब्दोऽपि तृतीयं प्रमाणं यतः 'तवायं पिता' इत्यादिना मात्रादीनां वचसैव किल निश्चीयते पितुः पितृता तनयेनेति प्रत्यक्षानुमानशब्द-त्रितय-प्रामाण्यवादिनः साङ्ख्याः। प्रत्यक्षानुमानोपमानशब्द-चतुष्टयप्रामाण्यवादिनो नैयायिकाः। प्रत्यक्षानुमानोपमान-शब्दार्थापत्तिप्रमाणपञ्चकवादिनः प्राभाकराः। प्रत्यक्षानु-

मानोपमान-शब्दार्थापत्त्यनुपलब्धिप्रामाण्यवादिनो भाट्टाः, 'व्यवहारे भाट्टनयः' इति वादिनो वेदान्तिनः। तत्राप्यपौरुषेयत्वे-नाभिमतानां वेदानामेवोत्तमप्रामाण्यमभ्युपगच्छन्तो मीमांसका वेदान्तिनश्चान्येषां प्रमाणानां प्रायस्तदनुरोधेनैव प्रामाण्यमङ्गी-कुर्वन्ति। अधिकारिभेदेन च कर्मकाण्डज्ञानकाण्डयोरविरुद्धं प्रामाण्यमूरीकुर्वन्त औपनिषदाः, न केवलं पूर्वस्योत्तरस्य वा, सर्वस्यापि वेदराशेः फलवत्तां प्रतिपादयन्ति। तदनुसारेण चाखण्डाद्वैतात्मज्ञानमेव निःश्रेयससाधनं वस्तुतो निःश्रेयसरूपं अङ्गीक्रियते; यत्किलोपलब्धुं शक्नुयाल्लक्षेष्वेकः। अतएवाहुः शङ्करभगवत्पादाः—

जन्तूनां नरजन्मदुर्लभमतः पुंस्त्वं ततो विप्रता,
तस्माद्वैदिक - धर्ममार्गपरता विद्वत्त्वमस्मात्परम्।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थितिः,
मुक्तिर्नो शतकोटिजन्म-सुकृतैः पुण्यैर्विना लभ्यते॥

संक्षेपेणैषा प्रक्रिया औपनिषदानाम्। प्रत्यक्षमेवेदं वाह्यं सर्वमपि जगत् यस्य किल सत्ता न केनापि सन्दिह्यते लोके। जीवात्मा च कार्यकरणाध्यक्षः विदित एव सर्वेषां देहेन्द्रियादि-भिन्नतया अहंप्रत्यय-विषयः "ममेदं देहेन्द्रियादिकम्" "अहं मनसा चिन्तयामि" इत्यादिको हि सार्वजनीनः प्रत्ययो जीवात्मनो देहेन्द्रियादिभिन्नतां तत्सम्बद्धताञ्च स्पष्टमवगमयति। जग-जीवाभ्याञ्चान्यः परमात्मा, यस्य खलु सत्ता न केवलं श्रुत्या, तदनुगृहीतेन "क्षित्यादिकं सकर्तृकं, कार्यत्वाद् घटवत्" इत्यादि तर्केणापि निश्चीयते। प्रायश्चेमान् जगज्जीवेश्वरान् तेषाञ्च मिथःसम्बन्धमधिकृत्य प्रवर्तते सर्वोऽप्याध्यात्मिको विचारः।

तत्र जगज्जीवजो: प्रातिभासिकीमेव सत्तां निश्चिन्वतो वेदान्तिनः विशुद्धस्यैकस्यैव ब्रह्मणः पारमार्थिकीं सत्तामूरीकुर्वन्ति। परमात्मप्रतिपादिका हि वह्वयः श्रुतयः ब्रह्मणोऽद्वैततां तद्भिन्नस्य चापारमार्थिकतां मुक्तकण्ठमुद्घोषयन्त्यो जीवात्मनस्सच्चिदानन्दरूपतां तदभिन्नताञ्च प्रतिपादयन्ति। "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" "नेह नानाऽस्ति किञ्चन" "द्वितीयाद्वै भयं भवति" "मृत्योः स मृत्युमाप्नोति य इह नानेवपश्यति" स यश्चायं पुरुषे, यश्चाऽसावादित्ये, स एकः "उदरमन्तरं कुरुते अथ तस्य भयं भवति" "सर्वाणि भूतान्यात्मैवाभूद्विजानतः" "तत्र को मोहः, कः शोकः एकत्वमनुपश्यतः" "ईशावास्यमिदं सर्वम्, ऐतदात्म्यमिदं सर्वम्" "यस्मिन्नेकस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति" "स आत्मा तत्त्वमसि श्वेतकेतो" "सर्वं खल्विदं ब्रह्म" "तज्जलानिति शान्त उपासीत" इत्याद्याः कति वा नोपलक्ष्यन्ते श्रुतयः अद्वैतात्मप्रतिपादिकाः? आत्मनश्चेयं सर्वश्रुतिप्रतिपादिता अद्वैतता तदैवोपपद्येत" यदा तद्भिन्नतया भासमानस्यास्य जगतो जीवात्मनाञ्च तत्सत्ताभिन्ना सत्तां नाङ्गीक्रियते। अतएव जगतः मिथ्यात्वमनिर्वचनीयताञ्चाभ्युपगच्छन्ति वेदान्तिनः रज्जुसर्पशुक्तिरजतादीनां दृष्टान्तेन। रज्ज्वादिषु ह्यारोपिताः सर्पादयो न सन्तो वक्तुं शक्यन्ते, पाश्चात्त्येन बाधज्ञानेन बाध्यमानत्वात्। नापि च शशिशृङ्गादिवदयन्तमसन्तः, प्रतिभासमानत्वात्। अतश्च प्रतिभासमात्रोपलब्ध-सत्ताकानामेतादृशां नैवाङ्गीक्रियते रज्ज्वादिसत्ताव्यतिरिक्ता सत्ता। इयमेव च रीतिर्नित्यशुद्धबुद्धमुक्तस्वभावे ब्रह्मणि मायावशेन कल्पितस्य

